इति विशेषसूत्रं तस्य सवर्णस्यैकत्वात्। पक्षांतरमाह। परेण०। वा अथवा इह व्याकरणे प्रायशो बाहुल्येन बहुषु स्थानेषु परेण अग्रेतनसूत्रेण पूर्वसूत्रस्य बाधो निषेधो दृश्यताम्। यथा (इ यं स्वरे) इति सूत्रं प्राक् प्रतिपादितं तस्य हि (सवर्णे दीर्घः०) इति सूत्रेण बाधः। तदेवाह प्रायशो बाहुल्येनेह व्याकरणे एवं दृश्यतां इत्यनेनोत्सर्गापवादावुक्तौ॥ ततः उत्सर्गापवादयोरपवादविधिर्बलवानिति न्यायो दर्शितः। एकस्मिन्नेवोदाहरणे सूत्रद्वयसंभवे सामान्यविशेषयोर्यद्विशेषसूत्रं तल्लगति। पूर्वोक्तपरोक्तयोः सूत्रयोर्यत्परोक्तं सूत्रं तत्प्राप्नोति न तु पूर्वोक्तमिति भावः। एवं भानु उदयः। अत्र (उ वं) इति सामान्यं। (सवर्णे दीर्घः सह) इति विशेषः एवमन्यत्रापि श्लोकार्थोऽयम्[1]।

**(अ इ ए) अवर्ण इवर्णे परे सह ए भवति। तव इदं तवेदं (हलादेरीषादौ टेर्लोपो वक्तव्यः) हल ईषा हलीषा। मनस् ईषा मनीषा। लांगल ईषा लांगलीषा। शक अंधुः शकंधुः। कर्क अंधुः कर्कंधुः। कुल अटा कुलटा। सीमन् अंतः सीमंतः। सार अंगः सारंगः। पतत् अंजलिः पतंजलिः। अद्य ओम् अद्योम्॥ (उ ओ) अवर्ण उवर्णे परे सह ओ भवति॥ गंगा उदकं गंगोदकं। तीर्थ उदकं तीर्थोदकं॥ (ऋ अर्) अवर्णादृवर्णे परे सह अर् भवति॥ तव ऋद्धिः तवर्द्धिः॥**

सूत्रं॥ अ। १-१। सांके० इ। ७-१। सांके०॥ ए १-१। सांके०॥ तव अग्रे इदं। (अ इ ए) अवर्णः इवर्णे परे सह उभयोर्योगेन ए भवति॥ तव इदं तवेदं इत्युदाहरणं। गंगा इयं गंगेयं॥ अत्रापि विशेषमाह। हल आदिर्यस्य स हलादिः। तस्य हलादेः। ६-१॥ (ङिति। ङसिङसोरस्य) इत्यकारलोपः (स्रो०) ईषा आदिर्यस्य स ईषादिः तस्मिन् ईषादौ। ७-१। ङि (ङेरौ ङित्) औ ङित्त्वाट्टिलोपः। स्वर०। टि। ६-१॥ अस् (ङिति। ङसिङसोरस्य। स्रो०। नामिनोरः। राद्यपो द्विः) लोपः। १-१। (स्रो०)। वक्तव्यः। १-१ (स्रो०) हलादेः शब्दगणस्य ईषादौ गणे परे टेः (अंत्यस्वरादिष्टिः) इति टेर्लोपो वक्तव्यः। हल अग्रे ईषा। अनेन टेर्लोपः। स्वर०। हलीषा। आदिशब्दान्मनस् ईषा मनीषा। लां-

---

१ वेदान्तादिष्वयमेव भूतसृष्ट्यादिक्रमे श्लोकार्थो विनियुज्यते यथा-भूतसृष्टौ प्रथमभूतं बाधित्वापरं महाभूतं समुत्पद्यते-प्रमाणं चात्र "तस्माद्वा एतस्मादात्मन आकाशः संभूतः आकाशाद्वायुः वायोरग्निः अग्नेरापः अद्भ्यः पृथिवी पृथिव्या ओषधय ओषधीभ्योऽन्नं अन्नाद्रेतः रेतसः प्रजाः इत्येष भूतसर्गः" इत्यादिषु पूर्वं पूर्वं बाधित्वोत्तरोत्तरं प्रवर्तते। अतएवोत्तरं पूर्वस्माद्बलवत्।

गल ईषा लांगलीषा। अग्र अग्रे आं अग्र्यां। शक अंधुः शकंधुः। कुल अटा कुलटा। सीमन् अंतः सीमंतः। पतत् अंजलिः पतंजलिः। सार अंगः सारंगः। इत्यादयोपि तथैव ज्ञेयाः सूत्रं ( उ ओं ) उ १–१ सांके०। ओं ७–१ सांके०। वृत्तिः कंठ्या। तव उदकं तवोदकं। गंगा उदकं गंगोदकं। सूत्रं। ( ऋ अर् ) ऋ। ७–१। सांके०॥ अर्। १–१ ( हसेपः० ) अर्थो वृत्तितो ज्ञेयः। तव अग्रे ऋद्धिः ( ऋ अर् ) [ जलतुंबिकान्यायेन रेफस्योर्ध्वगमनं ] तवर्द्धिः इति सिद्धम्।

**( क्वचिदार् ) अवर्ण ऋवर्णे परे सह समासे सति क्वचिदार् भवति। ऋण ऋणं ऋणार्णं। प्र ऋणं प्रार्णं। वसन ऋणं वसनार्णं। वत्स ऋणं वत्सार्णं। वत्सतर ऋणं वत्सतरार्णं। कंबल ऋणं कंबलार्णं। दश ऋणं दशार्णं। शीत ऋतः शीतार्त्तः। दुःख ऋतः दुःखार्त्तः॥**

क्वचित्। ७–१। ( अव्यया० )। आर्। १–१ ( हसेपः०। चपा अचे० ) वृत्तेरर्थो ज्ञेयः। तृतीयासमासांते पदे इत्यर्थः। क्वचित् प्रयोगांतरे अवर्णे ऋवर्णे परे सति सह उभयोर्योगेन आर् भवति। ऋण ऋणं ( क्वचिदार्। राद्यपो द्विः। ) स्वर० जलतुंबिका० ऋणार्णम्। एवं शीतार्तः। दुःखार्तः। वसनार्णं। कंबलार्णं। दशार्णं। वत्सतरार्णं। प्रार्णम्।

**( लृअल् ) अवर्ण लृवर्णे परे सह अल् भवति। तव लृकारः। तवल्कारः। ( रलयोः सावर्ण्यं वा वक्तव्यं। ) होतृ लृकारः होत्लृकारः। तृतीयासमासे च। शीतार्त्तः। दुःखार्त्तः। तृतीयेति किं। परमर्त्तः। परि अंकः पर्य्यंकः-पल्यंकः॥**

( लृ अल् ) लृ ७–१ सांके०। अल् १–१ ( हसेपः० ) वृत्तेरर्थो ज्ञेयः। तव अग्रे लृकारः। ( लृ अल्। राद्य० ) स्वर०। तवल्कारः। नन्वत्र लकारोस्ति रकारो नास्ति ( राद्यपो द्विः ) इति कथं लगति तत्राह। रलयोरिति। रकारलकारयोः सावर्ण्यं सदृशत्वं वक्तव्यं। तेन ( राद्यपो द्विः ) इति ककारस्य द्वित्वे तवल्क्कार इति सिद्धम्। रकारलकारयोः उपचारात् वा ग्रहणाद्वा वेदे ऋकारलृकारयोरपि सावर्ण्यं वक्तव्यं। होत्लृकारः।

---

१ वृत्तौ इ०पाठः। २ वक्तौ इ०पा०। ३ वा ज्ञेयम् इ० पा०।

सवर्णे होतॄकारः[1]। अत्र ऋऌवर्णयोरसवर्णत्वेनापि रलयोरित्यनेन सावर्ण्यं। "ऋऌवर्णस्थानिनोः प्रायः सावर्ण्यं रलयोर्भवेत्। तथा वेदे सवर्णत्वं स्यादृकारऌकारयोः॥" परि अग्रे अंकः पर्य्यंकः। एवं पलि अग्रे अंकः पल्यंकः। उभयत्रापि। (इ यं स्वरे। राद्यपो द्विः) स्वर० सिद्धं।

**(ए ऐ ऐ) अवर्ण एकारे ऐकारे च परे सह ऐकारो भवति। तव एषा तवैषा। तव ऐश्वर्य्यं तवैश्वर्य्यं। (ओ औ औ) अवर्ण ओकारे औकारे च परे सह औकारो भवति। तव ओदनं तवौदनं। तव औन्नत्यं तवौन्नत्यं॥**

सूत्रं (ए ऐ ऐ) ए ७–१। सांके०। ऐ। ७–१। सांके०। ऐ १–१ सांके०। वृत्तिः कंठ्या। उदाहरणं। तव अग्रे एषा। (ए ऐ ऐ) तवैषा। तव अग्रे ऐश्वर्य्यं (ए ऐ ऐ) तवैश्वर्य्यं। इति सिद्धं। सूत्रं। ओ। १–१। सांके०। औ ७–१ औ। १–१। सांके०। वृत्तिः कंठ्या। उदाहरणं। तव ओदनं (ओ औ औ) तवौदनं। तव अग्रे औन्नत्यं तवौन्नत्यं। गंगा अग्रे ओघः गंगौघः।

**(ओष्ठोत्वोर्वा।) अवर्णस्य ओष्ठोत्वोः परयोर्वा सह ओ भवति। बिंब ओष्ठः बिंबोष्ठः-बिंबौष्ठः। स्थूल ओतुः स्थूलोतुः-स्थूलौतुः॥ समासे इति किम्। तवौष्ठः।**

## इति स्वरसंधिः।

सूत्रं। ओष्ठश्च ओतुश्च ओष्ठोतू तयोः ओष्ठोत्वोः। ७–२ (उ वं) स्वर०। वा। ३–१ (अव्य०)। ओ। १–१ सांके० (ओ औ औ) अवर्णस्य ओष्ठोत्वोः शब्दयोः परयोः ओष्ठोत्वोः ओकारेण सह वा अकारस्य ओकारो भवति समासे सति। पक्षे (ओ औ औ) यद्वा (ओष्ठोत्वोर्वा) इति सूत्रं तदा ओष्ठोत्वोः परयोः अवर्णस्य वा लोपो भवतीति व्याख्या। बिंब अग्रे ओष्ठः। बिंबाकारावोष्ठौ यस्य स बिंबोष्ठः–बिंबौष्ठः। स्त्री चेत् बिंबोष्ठी-बिंबौष्ठी वा। अनेन एकत्र अकारलोपः। स्वर०। द्वितीये (ओ औ औ) तथैव स्थूलश्चासावोतुश्च स्थूलोतुः-स्थूलौतुर्वा। स्थूलमार्जार इत्यर्थः। समास इति किं। हे छात्र ओष्ठं पश्य छात्रौष्ठं पश्येत्येकमेव रूपं। एवं तवौष्ठः॥ इति स्वरसंधिः।

---

१ पक्षे होतॄकारः होतृऌकारः वर्णविश्लेषं कृत्वा होतऋऌकार इति जातम्। [ ऋऌोर्मिथः सावर्ण्यं वा वक्तव्यं। ] ऋस्थाने ऌ (तोर्लि लः) तस्य स्थाने लः ऋलोः मिथः सावर्ण्यं वाच्यम्। ऌस्थाने ऋ (सव०। स्वरही०) होत्लॄकारः इति सिद्धं॥ "रलयोर्डलयोश्चैव सषयोर्बवयोस्तथा। वदंत्येषां च सावर्ण्यमलंकारविदो जनाः॥"

न्सर्वोपि द्वंद्वो विभाषयैकवचनांतः स्यात्। ( एकत्वे द्विगुद्वंद्वौ ) इति नपुंसकत्वं। अनित्यं आगमानुशासनं इति ( नामिनः स्वरे ) इति नुमागमो न किंतु ( ङेरी ङित् ) तथा आ इति आक्षेपे। आ एवं किल मन्यसे। आ इति वाक्ये। आ एवं ईश्वरवचनमिति स्मरणे। स्मरणीयमित्यर्थः। अनाङ् आकारः संधिं न प्राप्नोति ॥

**(प्लुतः) प्लुतः संधिं न प्राप्नोति। देवदत्त ३ एहि। ( दूरादाह्वाने टेः प्लुतः। ) दूरादाह्वाने गाने रोदने विचारे च गम्यमाने टेः प्लुतो भवति। इति प्रकृतिभावः।**

सूत्रं ( प्लुतः ) १–१ ( स्रो० ) यत्र प्लुतस्तत्र संधिर्न भवति। भो देवदत्त ३ एहि "का एषा प्रस्तुतांगी प्रचलितनयना हंसलीला व्रजन्ती द्वौ पादौ कुंकुमार्द्रौ कनकविरचितौ नूपुरं शब्दयन्ती। इत्थं मार्गे गता सा बहुकुसुमलताबद्धवेणी स्वनंती तांबूलं वा महस्ते मदननिवासिता गुह्यशालां विवेश ॥१॥" अत्र विचारे टेः प्लुतत्वं तेन संधिर्न। क्वचित्तु संधिः। कश्चित्तु ( प्लुतोनितौ ) इति सूत्रं पठंति तेन प्लुतोपि इतिशब्दे परे संधिं न प्राप्नोति। यथा हा तात इति हा तातेति। देवदत्तेत्यादौ संधिर्भवति। प्लुतलक्षणमाह। सूत्रं। ( दूरादाव्हाने० ) दूरात्पंचम्येकवचनं। ५–१। ( ङसिरत्। सवर्णे० ) आव्हाने। ७–१ ( अइए ) टि। ६–१ ( ङिति। ङसिङसोरस्य। ) इत्यकारलोपः। ( स्रो० ) प्लुतः। १–१ ( स्रो० ) वृत्तिः कंठ्या। प्लुतस्तु उच्चारणमात्र एव नतु लिखनरूपः। इति प्लुतलक्षणं। इति प्रकृतिभावः ॥

## अथ व्यञ्जनकार्यमुच्यते।

**( चपा अबे जबाः। ) पदांते वर्त्तमानाश्चपा जबा भवंत्यबे परे। षट् अत्र षड्त्र। अच् अंतं अजंतं। तत् एतत् तदेतत्। ककुप् ऐंद्री ककुबैंद्री। वाक् यथा वाग्यथा ॥**

अथ प्रकृतिभावकथनानंतरं व्यंजनकार्यमुच्यते। व्यंजनानां संधिः कथ्यते इत्यर्थः। सूत्रं ( चपा अबे जवाः ) चकारपकाराभ्यां गृह्यमाणा वर्णाश्चपाः। चप।१–३( सवर्णे०। स्रो० ) अकारबकाराभ्यां गृह्यमाणः प्रत्याहारो अबस्तस्मिन् अबे। ७–१ ( अइए ) जकारबकाराभ्यां गृह्यमाणा वर्णा जबाः। जब१–१ ( स्रो०। सवर्णे० ) सिद्धं। चपा जबा अबे इति वक्तव्ये चपा अबे जबा इत्युक्तं तेन क्वचित्पदांतं विनापि जबा भवंति। यथा सद्गुरुर्भवदीयः इत्यादि। तथा क्वचिन्न भवति। यथा वैवस्वतः। सरस्वान्। मरुत्वान्। ताडित्वान्। वाचालः। वाचाटः। इत्यादौ न। अथवा असमासे साक्षादेव पदां-

---

१ प्लुतश्च इति पाठः। २ का एषा इत्यत्र कैषेति संधिप्राप्तौ प्लुतत्वान्न संधिरित्यर्थः।

ते समासादौ त्वंतर्वर्तिनीं विभक्तिमाश्रित्य पदांते इति वाच्यं पदांते स्थिताः चपा जबा भवंति । चटतकपानां क्रमेण ज १ ड २ द ३ ग ४ पा ५ भवंति अबे परे । षट् अग्रे अत्र । वाक् अग्रे यथा । उभयत्रापि । (चपा अबे जबाः) इत्यनेन डकारगकारौ भवतः । यथा । टस्य डः । कस्य गः । स्वर० । षडत्र । वाग्यथा । एवं अच् अंताः अजंताः । हरित् अश्वः हरिदश्वः । ककुप् एषा ककुबेषा । इति सिद्धं । दिश् अंबरः । दिश् अंतः । अत्र पदांतताश्रयणात् ( दिशामि ) ति कः । पश्चात् (चपा अबे जबाः ) दिगंबरः । दिगंतः । वाच् ईशः । अत्रापि पदांतताश्रयणात् ( चोः कुः ) पश्चात (चपा अबे जबाः) । वागीशः । अबे परे इति किं । वाक्पूतः षट्कुर्वंति ॥

**( ञमे ञमा वा ) पदांते वर्तमानाश्चपा ञमे परे ञमा वा भवंति । वाक् मात्रं वाङ्मात्रं वाग्मात्रं । षट्मम षण्मम षड्मम । ( मयटि नित्यं वाच्यं ) चित्मयं चिन्मयं । वाक्मयं वाङ्मयं ( चपाच्छश्शः ) चपादुत्तरस्य शकारस्य छो वा भवति अबे परे वाक् शूरः वाक्छूरः ॥**

सूत्रं ( ञमे ञमा वा ) ञकारमकाराभ्यां गृह्यमाणः प्रत्याहारो ञमस्तस्मिन् ञमे । ७–१ ( अ इ ए ) ञकारमकाराभ्यां गृह्यमाणा वर्णाः ञमाः । ञम । १–३ । ( सवर्णे० स्तो० ) वा ३–१ ( अव्य० । आद्बे लोपश्च ) चपानां ञमप्रत्याहारे परे वा विकल्पेन ञमा भवंति । च १ ट २ त ३ क ४ पा ५ नां क्रमेण ञ १ ण २ न ३ ङ ४ मा ५ भवंति । वाग्रहणात्पक्षे जबा अपि भवंति । वाङ्मात्रं वाक्पात्रं । एकत्र ङः । अन्यत्र गः । स्वर० । षट् अग्रे मम २ । एकत्र णः । अन्यत्र डः षण्मम-षड्मम । स्वर० । तत् नयनं तन्नयनं तद्नयनं । अप्मयः अम्मयः । मयटि प्रत्यये परे तु नित्यमेव ञमाः स्युः । यथा चिन्मयं वाङ्मयं । अत्र न विकल्पः । तथा च वाग्रहणादेव क्वचिज्जबस्यापि ञमाः स्युः । यथा मृद्मयः–मृन्मयः । सूत्रं । चप । ५–१ ( ङसिरत् । सवर्णे० ) चपात् अग्रे छः ( स्तोः श्चुभिः श्चुः ) इति तकारस्य चः । स्वर० । छ । १–१ । ( स्तो० ) विसर्जनीयस्य सः ( स्तोः श्चुभिः श्चुः । ) स्वर० । श । ६–१ । स्वर० ( स्तो० ) सिद्धं । चपादुत्तरस्य शकारस्य छः छकारो भवति वा विकल्पेन । वाक् अग्रे शूरः । अनेन शकारस्य छकारः । स्वर० । वाक्छूरः पक्षे वाक्शूरः । इति सिद्धं । छः शः इति विपरीतग्रहणात् वाक् श्चोततीत्यादौ छत्वं न स्यात् ।

**( हो झभाः ) चपादुत्तरस्य हकारस्य झभा वा भवंति । यद्वर्गगश्चपरस्तद्वर्गगश्चतुर्थो भवति । वाक् हरिः वाग्घरिः वाग्हरिः । तत् हविः तद्धविः तद्हविः ॥**

सूत्रं ( हो झभाः ) ह ६–१ । स्वर० ( स्रो० ) झभ । १–३ (सवर्णे० । स्रा०) यस्य वर्गस्य संबधी चपो हकारात्पूर्वं भवति तस्य वर्गस्य चतुर्थाक्षरं हकारस्थाने भवति । यथा ककारात्परस्य हस्य घः चकारात्परस्य हस्य झः टकारात्परस्य हस्य ढः तकारात्परस्य हस्य धः पकारात्परस्य हस्य भः "यद्वर्गस्य चपः पूर्वं हकारात्किल दृश्यते । हस्य स्थाने भवेद्वर्णस्तद्वर्गस्य चतुर्थकः ॥ १ ॥" वर्गचतुर्थो हस्य सवर्ण इति वाग्रहणात्क्वचिच्च पादनुत्तरस्यापि हस्य झभा भवंति । यथा समित् होमः समिद्धोमः । हकारस्य धः (झबे जबाः) इति सिद्धं । यद्वा क्वचिदनवसानेऽप्यवसानता ग्राह्या । तेन ( वावसाने ) इति धकारस्य तकारः । पश्चात् ( हो झभाः ) इत्यादि । एवं तत् हितः तद्धितः । तत् अग्रे हविः ( हो झभाः ) इति हकारस्य धकारः । पश्चात् ( चपा अबे जबाः ) तस्य दः ( स्वर० ) तद्धविः । तत् धृतं इत्यर्थः । वाक् अग्रे हरिः । हस्य घः पूर्ववत् ( चपा अबे जबाः ) इति कस्य गः । वाग्घरिः । वाचा कृत्वा हरिः सिंह इति सिद्धम् । अच् अग्रे हलौ अज्झलौ । षट् अग्रे हलानि षड्ढलानि । ककुब् अग्रे हासः ककुब्भासः ।

**(स्तोः श्चुभिः श्चुः) स्तोः सकारस्य तवर्गस्य च शकारेण चवर्गेण च योगे शकारचवर्गौ यथासंख्येन भवतः । सकारस्य शकारः तवर्गस्य चवर्गः । कस् चरति कश्चरति । कस् शूरः कश्शूरः । तत् चित्रं तच्चित्रं । तत् शास्त्रं तच्छास्त्रं ।**

सूत्रं ( स्तोः श्चुभिः श्चुः ) स् च तुश्च स्तुः स्तस्य स्तोः । ६–१ । ( ङिति । ङसिङसोरस्य इत्यकारलोपः । ( स्रो० ) श् च चवश्च श्चवस्तैः श्चुभिः । ३–३ । ( स्रो० ) । श् च चुश्च श्चुः १–१ ( स्रो० ) अत्र ( एकत्वेऽपि द्विगुर्द्वंद्वौ । ) इति नपुंसकलिंगं युज्यते । परं छंदोवत् सूत्राणीति छांदसत्वात् पुल्लिंगत्वं । श्चुभिरित्यत्र बहुवचनमयथासंख्येन योगज्ञापकं तेन सकारस्य शकारचवर्गयोगे पूर्वतः परत उभयत्रापि संबंधे सति शकारः स्यात् । तवर्गस्य शकारचवर्गयोगे चवर्गः स्यात् । कस् चरति । कस् अग्रे शूरः । उभयत्रापि शकारः । स्वर० । कश्चरति । कश्शूरः । तत् चित्रं । तस्य चः । स्वर० । तच्चित्रं । तत् श्रवणं । तत् शास्त्रं । उभयत्रापि तस्य चः । ( चपाच्छः शः ) कस् छादयति कश्छादयति । अत्र सकारस्य शकारः । स्वर० । सत् अग्रे झंझा ( स्तोः श्चुभिः श्चुः ) इति तस्य चः ( चपा अबे जबाः ) चस्य जः । स्वर० । सज्झंझा ।

**( न शात् ) शकारादुत्तरस्य तवर्गस्य चुत्वं न भवति । प्रश् नः प्रश्नः । विश् नः विश्नः । ( ष्टुभिः ष्टुः ) स्तोः सकारतवर्गयोः षकारटवर्गाभ्यां योगे ष्टुर्भवति । सकारस्य षकारः त–**

१. उभयथापीत्यपि पाठः ।

वर्गस्य टवर्गः । कस् षष्ठः कष्षष्ठः । कस् टीकते कष्टीकते । तत् टीकते तट्टीकते ॥

सूत्रं ( न शात् ) न १–१ । ( अव्य० ) । श ५–१ ङसिरत् । ( सवर्ण० ) शकारादुत्तरस्य तवर्गस्य चुत्वं चवर्गो न भवति । प्रश् अग्रे नः । विश् अग्रे न । रूपद्वयेपि चवर्गस्य निषेधः । किंतु । स्वर० । प्रश्नः । पृच्छनं प्रश्नः । विश्नः विशतीति विश्नः । विच्छ गतौ विच्छनं विश्नः । सूत्रं ( ष्टुभिः ष्टुः ) ष् च टुश्च ष्टवस्तैः ष्टुभिः । ३–३ । ष् च टुश्च ष्टुः । १–१ । ( स्तो० ) ष्टुभिरित्यत्रापि बहुवचनमयथासंख्ययोगसूचकं । स्तोः सकारतवर्गयोः षकारटवर्गयोगे षकारटवर्गौ यथासंख्यं भवत इत्यर्थः । सकारस्य षकारः । तवर्गस्य टवर्गः । कस् अग्रे षष्ठः कस् अग्रे टीकते । उभयत्रापि सस्य षः । स्वर० । कष्षष्ठः । कष्टीकते । कः समर्थो भवतीत्यर्थः । टीकृ गतौ सामर्थ्ये च । तत् अग्रे टीकते अनेन तस्य टः । स्वर० । तट्टीकते । विद् अग्रे ठलः । पूर्वं ( खसे चपा० ) ततः ( ष्टुभिः ष्टुः ) विट्ठलः ।

( तोर्लि लः ) तवर्गस्य लकारे परे लकारो भवति । तत् लुनाति तल्लुनाति । भवान् लिखति भवाँल्लिखति । अंतस्थाद्विप्रभेदाः । रेफवर्जिता यवलाः सानुनासिका निरनुनासिकाश्च । तत्र सानुनासिक एव लकारः सानुनासिकस्य नकारस्य भवति ।

सूत्रं ( तोर्लि लः ) तु ६–१ ( ङिति ) तु इत्यस्य तो ( ङसिङसोरस्य । स्तो० ) तोः अग्रे ल् । ७–१ । स्वर० (नामिनो रः) जलतुम्बि०लि । ला । १–१ (स्तो०) तवर्गस्य उदाहरणं । तत् अग्रे लुनाति । अनेन तस्य लकारः । स्वर० तल्लुनाति । भवान् अग्रे लिखति ( तोर्लि लः ) । इति नस्य लत्वे कृते । अंतस्थाद्विप्रभेदाः । उच्चारणकाले जिव्हाया अंते तिष्ठंतीति अन्तस्थाः अथवा वर्गाणां अंते तिष्ठंतीति अंतस्थाः ॥ ते के यरलवाः ते च द्विप्रकाराः । कथंभूताः रेफेण रकारेण वर्जिताः । शेषा यवला इत्यर्थः । कथं द्विप्रभेदा इत्याह । सानुनासिका निरनुनासिकाश्च तत्र तथदधानां स्थाने लकारो निरनुनासिको भवति नकारस्य सानुनासिकत्वान्नकारस्थाने लकारोपि सानुनासिक एव भवति । तेन पूर्ववकारस्योपरि अर्द्धानुस्वारो भवति । स्वर० भवाँल्लिखतीति सिद्धं ।

( न षि ) षकारे परे तवर्गस्य टुत्वं न भवति । भवान् षष्ठः भवान्षष्ठः । ( टोरंत्यात् ) पदांते वर्त्तमानाट्टवर्गात्परस्य स्तोः ष्टुर्न भवति षट् नरः षड्नरः षण्नरः । षट् सीदंति षट्सीदंति ।

सूत्रं (न षि) न १–१ ।(अव्य०)। ष् । ७–१ । स्वर० । षकारे परे तवर्गस्य टवर्गो न भवति । भवान् षष्ठः । अत्रानेन (ष्टुभिः ष्टुः) इति प्राप्तस्य टवर्गस्य निषेधः किंतु । स्वर० । प्रकृतिभाव एव। सूत्रं ( टोरंत्यात् ) टु । ६–१(ङिति ) टु इत्यस्य टो (ङसिङसोरस्य ) इत्यकारलोपः ( स्त्रो० ) टोः अग्रे अंत्य ( नामिनोरः ) स्वर० । अन्त्य ५–१। ( ङसिरत् । सवर्णे दीर्घः०) पदांते वर्त्तमानो यः टवर्गस्तस्मादुत्तरयोः परयोः सकारतवर्गयोः षकारटवर्गौ न भवतः । परं नाम्नवतिनगरीवर्ज्जं । उदाहरणं । षट् अग्रे नरः । अत्र टुत्वनिषेधः । ततो ( ञमे ञमा वा ) चटञण । स्वर० । षण्नरः । पक्षे षड्नरः । ना नरौ नरः इति बहुवचनं । षट् अग्रे सीदंति । अत्र षत्वनिषेधः । नाम्नवतिनगरीवर्जनात् । षण्णां । षण्णवतिः । षण्णगर्यः । अत्र ( टोरंत्यात् ) इति सूत्रं न लगति किंतु ( ष्टुभिः ष्टुः ) इति भवति । स्वर० ।

**( नः सक् छते ) नांतस्य पदस्य छते परे समागमो भवति । ( टित्किताद्यंतयोर्वक्तव्यौ । ) टित्त्वादादौ कित्त्वादंते । राजन् चित्रं राजंश्चित्रं । भवान् तनोति भवांस्तनोति ।**

सूत्रं । न् । ६–१ । स्वर० । ( स्त्रो० । ) सक् । १–१ । ( हसेपः० ) छत । ७–१ । ( अ इ ए ) त्रिपदं । नान्तस्य नकारांतस्य पदस्य छते छठथचटतत्त्वलक्षणे प्रत्याहारे सक् इत्यागमो भवति । ककारः स्थाननियमार्थः । तमेवाह ।( टित्कितौ० ) । ट इत् यस्यासौ टित् क इत् यस्यासौ कित् । टिच्च किच्च टित्कितौ टित्किताावागमौ क्रमेण आद्यंतयोर्विषये भवतः । टित् आदौ कित् अंते इत्यर्थः । अत्र कित्वात् अन्ते । राजन् अग्रे चित्रं । भवान् अग्रे तनोति । उभयत्रापि सकागमः । अकारउच्चारणार्थः । एकत्र ( स्तोश्चुभिः० ) इति सस्य शः । उभयत्रापि स्वर० । यदागमास्तद्गुणीभूतास्तद्ग्रहणेनैव गृह्यंते इति आगमांतं पदमित्यपदांतत्वान्नकारस्य ( नश्चापदांते झसे ) इत्यनुस्वारः ।

**( शे चक् वा ) नांतस्य पदस्य शे परे वा चगागमो भवति । भवान् शूरः भवाञ्च्छूरः भवाञ्शूरः भवाञ्शूरः । ( ङ्णनो ह्रस्वाद्द्विः स्वरे ) । ङकारणकारनकारा ह्रस्वादुत्तराद्द्विर्भवन्ति स्वरे परे पदांते च । प्रत्यङ् इदं प्रत्यङ्ङिदं । सुगण् इह सुगण्णिह । राजन् इह राजन्निह ।**

सूत्रं । ( शे चग्वा ) श । ७–१ । ( अ इ ए ) चक् । १–१ । ( हसे० ) । वा । १–१ (अव्य०) । नांतस्य इति । नकारांतस्य पदस्य शे शकारे परे वा विकल्पेन चक् आगमः स्यात् । भवान अग्रे शूरः । ३ । अत्र ( चपाच्छः शः ) इति सूत्रस्य विक-

ल्पेन प्राप्त्यर्थं रूपद्वये चगागमः । च पदत्रयेपि ( स्तोः श्चुभिः श्चुः ) नस्य ञः । प्रथमरूपे ( चपाच्छः शः ) शस्य छः सर्वत्र स्वर० । भवाञ्च्छूरः भवाञ्च्शूरः भवाञ्शूरः। तृतीयरूपे चगागमाभावे भवाञ्शूरः । सूत्रं ( ङ्णनो ह्र० ) ङ् च ण् च न् च ङ्णन् । १–३ स्वर० । ( स्रो० ) अग्रे ह्रस्वात्। ५–१ । पूर्वं ( हबे । उओ ) द्विः । १–१ ।(अव्य०। चपा अबे जबाः ) स्वर० । ७–१ । ( अइ ए ) सिद्धं ह्रस्वादुत्तराः परा ये ङकारणकारनकारास्ते द्विर्भावमापद्यंते द्वौ भवतः इत्यर्थः स्वरे परे पदांते विषये । अत्र पुनः स्वरग्रहणं विभक्तिस्वरनिषेधार्थं । प्रत्यङ् अग्रे इदं । गण् संख्याने । सुपूर्वः सुष्ठु गणयतीति सुगण् क्विंतः । सुगण् अग्रे इह । राजन् अग्रे इह । सर्वत्रापि द्वित्वं । स्वर० । प्रत्यङ्ङिदं । सुगाण्णिह । राजन्निह ।

**( छः ) ह्रस्वादुत्तरश्छकारो द्विर्भवति । ( खसे चपा झसानाम् ) झसानां खसे परे चपा भवंति । तव छत्रं तवच्छत्रं । (क्वचित् दीर्घादपि वक्तव्यः) ह्रीछः ह्रीच्छः । म्लेछः म्लेच्छः ।**

सूत्रं । छ १–१ । ( स्रो० ) एकपदं । वृत्तिः कंठ्या । उदाहरणम् । तव अग्रे छत्रं अनेन छस्य द्वित्वं । तव छ् छत्रमिति स्थिते । सूत्रं । ( खसे चपा झसानां ) खस ७–१ ( अ इ ए ) चप १–३ ( सवर्णे० । स्रो० ) झस ६–३ ( नुडामः । नामी ) इति दीर्घः स्वर० ( मोनु० ) सिद्धं । झसानां चपाः भवंति खसे परे । अत्र यथासंख्यगणनात् छस्य तकारः संभवति । परं वर्ग्यो वर्ग्येण सवर्ण इति वचनात् चकार एव क्रियते । स्वर० । तवच्छत्रमिति सिद्धं । पक्षांतरमाह । दीर्घादित्यादि । क्वचित् कस्मिंश्चित्स्थाने दीर्घादुत्तरोऽपि छकारो द्विर्भवति । यथा म्ले अग्रे छः । ह्री अग्रे छः । रूपद्वयेप्यनेन द्वित्वे विहिते प्राग्वत् । ( खसे च० ) स्वर० म्लेच्छः । म्लेछ अव्यक्ते शब्दे । म्लेच्छयतीति म्लेच्छः । अथवा म्लै गात्रविनामे । म्लायते इति म्लेच्छः । ह्रीच्छः ह्री लज्जायां ह्रीच्छतीति ह्रीच्छः । एवं आच्छादयति । ह्रीच्छाति । ऐच्छत् । माच्छिदत् । स्त्रीच्छाया इत्यादौ दीर्घात्परस्य छस्य द्वित्वं ।

**( मोऽनुस्वारः ) मकारस्यानुस्वारो भवति हसे परे पदांते च । तम् हसाति तं हसाति । पद्मम् वृथा पद्मं वृथा ॥**

सूत्रं ( मोऽनु० ) म् । ६–१ । स्वर० । ( स्रो० । ) मः अग्रेऽनुस्वारः । १–१ ( स्रो० ) मध्ये ( अतोत्युः । उओ । एदोतोतः ) मकारस्य हसे परेऽथवा पदांते सत्यनुस्वारो भवति । उदाहरणम् । तम् अग्रे हसाति । पद्मम् अग्रे वृथा । उभयत्राप्यनुस्वारः । तं हसति । पद्मं वृथा । पदांते इति किं । गम्यते इत्यादौ अनुस्वारो न ।

**( नश्चापदांते झसे । ) नकारस्य मकारस्य चापदांते वर्तमा-**

नस्यानुस्वारो भवति झसे परे । यशान् सि यशांसि । पुम् भ्यां पुंभ्यां ।

सूत्रं ( नश्चापदां० ) न ६-१ स्वर० ( स्रो० ) । अग्रे च । १-१ । ( अव्य० । विसर्जनीय० । स्तोः श्चु० ) सस्य शः । स्वर० । अग्रे अपदांते । ७-१ । ( अ इ ए सवर्णे० ) झस ७-१ । ( अ इ ए ) सिद्धं । चकारः पूर्वोक्तस्य ( मोऽनुस्वारः ) इत्यतो मइत्यस्यानुकर्षणार्थः । तेन उभयोरप्यपदांते पदमध्ये वर्तमानयोर्नकारमकारयोर्झसे परे अनुस्वारो भवति । यशस् । १-३ । ( जश्शसोः शिः । नुमयमः । मिदंत्यात्स्वरात्परो० । न्सम्महतो० ) ततो यशान् अग्रे सि । पुम् अग्रे भ्यां । उभयत्राप्यनुस्वारः । यशांसि । पुंभ्यां । एवं पयान् अग्रे सि पयांसि ।

(यमा यपेऽस्य वा)अनुस्वारस्य यमा वा भवंति यपे परे। अस्य यपस्य सवर्णाः तं करोति तङ्करोति । तं तनोति तन्तनोति । ( यवलपरे यवला वा ) अनुस्वारस्य यवलपरे तु सानुनासिका एव यवला वा भवंति। संयन्ता सय्यँता। यंलोकं यँल्लोकं। संवत्सरः सँवत्सरः। (स्वरे मः) अनुस्वारस्य मकारादेशो भवति स्वरे परे। अस्माकं इह अस्माकमिह । शं अस्ति शमस्ति। सुखं एति सुखमेति । ( ॅ छंदसि ) छंदस्यनुस्वारो ॅ कारमापद्यते शषसहरेफेषु परतः। हंसः हॅसः।

इति व्यंजनसंधिः ॥

सूत्रं ( यमा यपे० ) यम १-३ ( सवर्णे० । स्रो० । ) यमाः । अग्रे यपे । ७-१ ( अ इ ए ) प्राक् ( आदबे० ) विसर्गलोपः । अग्रे इदम् ६-१ ( त्यदादेष्टेरः स्यादौ । दस्य मः ङस्स्य । स्म्यः ) इदमः स्थाने अ ( ऐदोतोतः ) वा ३-१ ( अव्य०) अनुस्वारस्य यमा वा भवंति पक्षे अनुस्वार एव तिष्ठति यपप्रत्याहारे परे । कथमित्याह । अस्य अग्रे वर्तमानस्य यपस्य सवर्णा एव यमा भवंति । अनुस्वारस्य सानुनासिक्यात् ये सानुनासिका यमाः त एव भवंति । वर्ग्यो वर्ग्येण सवर्ण इति वचनात् । वर्ग्ये अक्षरे परे तद्वर्गस्य पंचमाक्षरं भवति । अन्यत्र यादृशो यपोऽग्रे भवति तादृश ए-

१ ( नोपधायाः० )-इति पाठः पुस्तकान्तरे दृश्यते-परं सोत्र ' यशानस् इ ' इत्यस्मिन्नुदाहरणे दीर्घं विधातुमप्राप्तेस्तस्य सूत्रस्याप्रायोजनिक एव ' यशनस् ' इत्यस्य सकारान्तत्वाद्युक्तोऽयमत्र ' न्सम्महतो दीर्घः शौच ' इति पाठ इति सुधियो विदांकुर्वन्तु ।

व:क्रियते । यथा कवर्गे परे ङकारः । चवर्गे परे ञः । टवर्गे परे णः । तवर्गे परे नः । पवर्गे परे मः । यंवलेषु परेषु यवला एव स्युः । उदाहरणं । त्वं अग्रे करोषि । तं अग्रे तनोति । ककारे परे अनुस्वारस्य ङः तकारे परे अनुस्वारस्य नः । स्वर० । त्वङ्करोषि । तन्तनोति । सं अग्रे यंता । अत्रानुस्वारस्य यः अग्रे च ( अंतस्था द्विप्रभेदाः ) इति सानुनासिकत्वात् सस्य उपरि अर्द्धचन्द्राकारो विंदुः । सँय्यंता । एवं संवत्सरः सँव्वत्सरः । पुंलिंगः पुँल्लिंगः । अत्र केचित् ( स्वरे मः ) अनुस्वारस्य मकारो भवति स्वरे परे इति सूत्रं पठन्ति । परं स्वरे परे पूर्वं ( मोऽनुस्वारः ) एव न भवति । किंतु स्वरहीनमेव स्यात् । कृष्णो मां अवतु कृष्णो मामवतु । जिनं ईडे जिनमीडे (शं अस्ति शमस्ति) अस्माकं इह अस्माकमिह । ( ङ्णोः कक् टक् वा ) ङकारणकारयोः शषसेषु परेषु क्रमेण कक् टक् आगमौ वा स्तः ( प्राङ् षष्ठः प्राङ्क्षष्ठः ) लिङ् सु लिङ्क्षु ( सुगण् षष्ठः सुगण्ट् षष्ठः ) ( ᳲ छंदसि ) अनुस्वारः ᳲकारमापद्यते शषसहरेफेषु परतः छंदसि वेदे । हंसः हᳲसः । सुचीं षत् सुचीᳲषत् । वयं साम वयᳲसाम । संहिता सᳲहिता । तं रविः तᳲरविः । इति चतुर्थसंध्यनुसारेण व्यंजनसंधिरेवावचूरिलेशतो लिखितः । इति व्यञ्जनसंधिः संपूर्णः ।

## ॥ अथ विसर्गसंधिर्निगद्यते ॥

**( विसर्जनीयस्य सः ) विसर्जनीयस्य सकारो भवति खसे परे । कः तनोति कस्तनोति । ( शषसे वा ) विसर्जनीयस्य शषसे परे शषसा वा भवंति ॥ कः शेते कश्शेते । कः षंढः कष्षंढः । कः साधुः कस्साधुः ॥**

अथेति । व्यंजनकार्यकथनानंतरं विसर्गाणां संधिर्निगद्यते कथ्यते । द्वौ बिंदू विसर्गः सूत्रं ( विसर्जनीयस्य सः ) विसर्जनीय ६–१( ङस्य ) अग्रे स १–१ । ( स्रो० ) सिद्धं । विसर्जनीयस्य सकाररकारोत्पन्नस्य कृष्णसर्पचक्षुराकारविंदुद्वयरूपस्य खसे परे सकारो भवति । श्लोको यथा "शृंगवद्बालवत्सस्य कुमारीस्तनयुग्मवत् । नेत्रवत्कृष्णसर्पस्य स विसर्ग इति स्मृतः" उदाहरणं । कः अग्रे तनोति । अनेन विसर्गस्य सकारः

---

१ कस्मिंश्चित्पुस्तके 'यरलवेषु' इति पाठः । २ कस्मिंश्चित्पुस्तके 'पुँल्लिंगः' इत्यस्योत्तरं 'संरमते सँरमते' इति पाठो दृश्यते। परन्तु रेफे परेऽनुनासिकविधानं वैदिकप्रयोगेष्वेव बाहुल्येन दृश्यते नतु लौकिकेषु । अतएव अग्रे (ᳲछंदसि) इति सूत्रस्य तँ रविः तं रविः इत्युदाहरणं संगच्छते । ३ पुस्तकान्तरेतु वाहुलकभेदव्याख्यानानंतरं वैदिकप्रयोगव्याख्यानावसरे (शषसहरेफेषु छन्दसि अनुस्वारस्य ᳲकारो वा वक्तव्यः) इति वार्त्तिकमुक्त्वा हᳲसः हंसः इत्युदाहरणद्वयमुपन्यस्तं दृश्यते ।

स्वर० । कस्तनोति । (शषसे वा) द्विपदं सूत्रं । विसर्जनीयस्य शषसेषु परेषु शषसा एव वा भवंति । पक्षे विसर्जनीय एव तिष्ठति । कः शेते कश्शेते । कः षंढः कष्षंढः । कः साधुः कस्साधुः । क्षेपकसूत्रमिदम् ।

**(कुप्वोः ᳵक ᳶपौ वा) विसर्जनीयस्य कवर्गपवर्गसंबंधिनि खसे परे ᳵक ᳶपौ वा भवतः । कपावुच्चारणार्थौ । कः करोति कᳵकरोति । कः पचति कᳶपचति । कः खनति कᳵखनति । कः फलति कᳶफलति । (वाचस्पत्यादयः संज्ञाशब्दा निपातात्साधवः) वाचस्पतिः । बृहस्पतिः । कारस्करः । पारस्करः । राजन् तुंदं राजंस्तुंदं । हरिः चन्द्रः हरिश्चंद्रः । (तद्बृहतोः करपत्योश्चौरदेवतयोः सुट् तलोपश्च) तत् करः तस्करः । बृहत् पतिः बृहस्पतिः ।**

पुनर्विशेषमाह सूत्रं । (कुप्वोः ᳵकᳶपौ वा) कुश्च पुश्च कुपू तयोः कुप्वोः । ६-२ (उ वं) स्वर०(स्रो०) अग्रे ᳵकश्चᳶपश्चᳵकᳶपौ । १-२(ओ औ औ) वा । ३-१ । (अव्य०) विसर्जनीयस्य कवर्गपवर्गसंबंधिनि कखपफरूपे खसे परेᳵकᳶपौ जिव्हामूलीयोपध्मानीयसंज्ञौ यथासंख्यं वा भवतः । पक्षे विसर्जनीय एव तिष्ठति । अयमर्थः । कखयोः परयोः ᳵकः । पफयोः परयोः ᳶपः । कपौ ककारपकारावुच्चारणार्थौ अन्यथोच्चरितुमशक्यत्वात् । अतो वज्राकारगजकुंभाकारौ तिष्ठतः । कः अग्रे करोति । अत्र विसर्गः कᳵकरोति । कःअग्रे पचति । कᳶपचति । एवं कᳵखनति । कᳶफलति । वाचस्पत्यादयः संज्ञाशब्दाः संज्ञावाचकाः कस्यापि नामप्रतिपादकाः शब्दाः तेपि निपातनात्साधवः निपातसिद्धा एव ज्ञेयाः । यथा वाचस्पतिः । अत्र (कुप्वोःᳵकᳶपौ वा) इत्यस्य प्राप्तावपि विसर्जनीयस्य सकार एव निपात्यते । एवं भास्करः । श्रेयस्करः। श्रेयस्कामः । अयस्कांतः । अयस्कुंभः । अयस्पात्रं । तमस्कांडः । दिवस्पतिः । नमस्कारः । अहस्कारः।बृहस्पतिः । तस्करः। शास्त्रांतरे त्वित्थं दृश्यते । प्रक्रियाकौमुद्यां तद्बृहतोः करपत्योश्चौरदेवतयोः सुडागमस्तलोपश्च । तत् अग्रे करः । अनेन सुडागमः । तलोपः तस्करः । बृहत् अग्रे पतिः सकारागमः । तलोपः । बृहस्पतिः । चकारात् हरिश्चंद्रः । मस्करः । मस्करी । परिव्राजकवेण्वोः । कांस्कान् । कस्कः । कस्कादयः । एवं अश्वत्थकपित्थदधित्थादिषु स्थाधातोः सस्य तः इत्यादयः साधवः सिद्धा एव ज्ञेयाः । यल्लक्षणेनोपपन्नं तत्सर्वं निपातात्सिद्धमेवेति लक्षणसूत्रमंतरेण लोकप्रसिद्धरूपोच्चारणं निपातनम् ।

**( अह्नो रोऽरात्रिषु ) अन्हो विसर्ज्जनीयस्य पदांते रो भवति रात्र्यादिवर्ज्जितेषु परतः । अहः पतिः अहर्पतिः । अरात्रिष्विति विशेषणात् । अहः रात्रं अहोरात्रं । अहः रूपं अहोरूपं । अहः रथंतरं अहोरथंतरं ।**

सूत्रं ( अह्नो रोऽरात्रिषु ) अहन् । ६–१ । ( अह्लोपः स्वरे । स्रो० ) अह्नः अग्रे रः १–१ ( स्रो० ) मध्ये । ( हबे । उओ । स्रो० ) रः अग्रे अरात्रि । ( अतोत्युः । उओ । एदोतोतः ) न रात्रयः अरात्रयस्तेषु अरात्रिषु ७–३ । (क्लिलात्षः सः०) अहन्शब्दसंबंधिनो विसर्जनीयस्य पदांते रो भवति रात्र्यादिवर्जितेषु रात्र्यादिभिन्नेषु शब्देषु परेषु सत्सु । रकारादिरात्रिरूपरथंतरादिवर्जितेष्वित्यर्थः । उदाहरणं अहन् अग्रे पतिः । अहन् अग्रे गणः ( अन्हः ) इति सूत्रेण उभयत्रापि नस्य सः । ( स्रो० ) अनेन सूत्रेण विसर्गस्य रः । ( राद्यपो द्विः ) जलतुं० । अन्हो दिवसस्य पतिः अहर्प्पतिः । अन्हां गणः अहर्गणः । अत्रांतर्वर्तिनीं विभक्तिमाश्रित्य पदांतत्वं ग्राह्यं । अरात्रिष्विति विशेषणात् । रात्र्यादिवर्जनात्किं । अहन् अग्रे रात्रं । ( अन्हः ) इति नस्य सः । अरात्रिष्विति कथनात् रनिषेधः । ततो ( हबे । उ ओ । ) अहोरात्रम एवं अहोरूपं । प्रशस्तं अहः अहोरूपं । "अहोरथंतरं साम श्रेष्ठं साम रथंतरं" । अहोरथंतरः । पदांत इति किं । अहोभ्याम् ॥

**( अतोत्युः ) अकारात्परस्य विसर्जनीयस्य उकारो भवति अति परतः । कः अर्थः । कोऽर्थः । ( हबे ) अकारात् परस्य विसर्जनीयस्य उकारो भवति हबे परे । कः गतः । को गतः । देवः याति । देवो याति । मनः रथः । मनोरथः ।**

सूत्रं ( अतोत्युः ) अत् । ५–१ । स्वर० । ( स्रो० ) अतः अग्रे अत् । ७–१ । स्वर० । मध्ये ( अतोत्युः । उओ । एदोतोतः ) अग्रे उ । १–१ ( स्रो० ) । पश्चात् ( इयं स्वरे । ) स्वर० सिद्धिः । वृत्तिः कण्ठ्चा । अति परतः अकार एव परे इत्यर्थः । तपरकरणं तावन्मात्रग्रहणार्थं उभयत्रापि सवर्णनिषेधार्थम् । उदाहरणं । कः अग्रे अर्थः । अनेन उकारः । (उ ओ० । एदोतोतः) कोऽर्थः । सूत्रं (हबे) ७–१ । (अइए) वृत्तिः सुगमा । उदाहरणं कः गतः । अत्र अकारात्परस्य विसर्जनीयस्य हबे परे उकारः ततः ( उओ ) को गतः । देवः याति ( हबे । उओ ) देवो याति । मनः रथः( हबे । उओ । ) मनोरथः ॥

---

१ प्रसिद्धां इति पाठोऽन्यत्र पुस्तके ।

**( आदबे लोपश् ) अवर्णात्परस्य विसर्जनीयस्य लोपश् भवत्यबे परे । देवाः अत्र देवा अत्र । वाताः वाताः वातावाताः ।**

सूत्रं ( आदबे० ) अ ५–१ ( ङसिरत् । सवर्णे० ) आत् । अब । ७–१ । ( अ इ ए ) मध्ये ( चपा अबे जबाः ) लोपश् १–१ । ( हसे० ) यदि वा अश्च आ च आ । ५–१ ङस् ( नपुंसकस्ये ) ति ह्रस्वः ( ङसिरत् ) अवर्णात् अकारआकाररूपादुत्तरस्य विसर्जनीयस्य लोपश् भवति अबे परे । उदा० । देवा अग्रे अत्र । वाताः अग्रे वाताः । उभयत्रापि विसर्गलोपः । देवा अत्र । वाता वाताः । एवं कः इह क इह ।

**( स्वरे यत्वं वा ) अवर्णात्परस्य विसर्जनीयस्य स्वरे परे यत्वं वा भवति । देवाः अत्र देवायत्र देवा अत्र ।**

पुनर्विशेषमाह । सूत्रं ( स्वरे यत्वं वा ) स्वरे ७–१ ( अ इ ए ) यत्वं । १–१ ( अतो अम् । अम्शसो० । मोनु० ) । वा । ३–१ । ( अव्य० ) वृत्तिः कंठचा । वाग्रहणात्पक्षे ( आदबे लोपश् ) देवाः अग्रे अत्र । एकत्र यत्वं । स्वर० । देवायत्र । अन्यत्र लोपश् । देवा अत्र ।

**( भोसः ) भोस् भगोस् अघोस् इत्येतस्मात्परस्य विसर्जनीयस्य लोपश् भवत्यबे परे । भोः एहि भो एहि । भगोः नमस्ते भगो नमस्ते । अघोः याहि अघो याहि ।**

सूत्रं ( भोसः ) भोस् । ५–१ । स्वर० ( स्रो० ) जातीयग्रहणेन तज्जातीयग्रहणं । यद्वा भोस् इत्यत्र आद्यंतग्रहणेन प्रत्याहारः सूचितस्तेन भोः भगोः अघोः इत्येतस्मात्पदत्रयात्परस्य विसर्जनीयस्याबे परे लोपश् भवति । उदा० । भोः अग्रे एहि आगच्छ । भगोः अग्रे नमस्ते । हे भगो हे भगवन् ते तुभ्यं नमः । अघोः अग्रे याहि । हे अघो हे पाप याहि गच्छ । सर्वत्र ( भोसः ) इति सूत्रेण विसर्गलोपश्च यो वा स्वरे । भो एहि । भोयेहि ।

**( नामिनो रः ) नामिनः परस्य विसर्जनीयस्य रेफो भवति अबे परे । अग्निः अत्र अग्निरत्र । बटुः यजते बटुर्यजते ।[3] [ रेफप्रकृतिकस्य खपे वा ] रेफाज्जातस्य विसर्जनीयस्य रेफो वा भवति खपे परे । गीः पतिः गीर्पतिः गी ≍ पतिः । धूः पतिः धूर्पतिः धू≍पतिः ।**

सूत्रं ( नामिनो रः ) नामिन् ५–१ । स्वर० । ( स्रो० ) अग्रे रः । १–१ । ( स्रो०

१ वाताः वांति वाता वांति इत्यन्यस्मिन्पुस्तके । २ यदिवेत्यपि पाठः । ३ पटुः यजते पटुर्यजते । इत्यपि पाठः ।

हवे । उ ओ ) नामिनो रः अवर्णवर्ज्जस्वरात्परस्य विसर्जनीयस्य अबे परे रेफो भवति । उदा० । अग्निः अग्रे अत्र । अनेन सूत्रेण रेफः । स्वर० । अग्निरत्र । बटुः अग्रे यजति । ( नामिनो रः ) इति रेफः ( राद्यपो द्विः ) जलतुं० । बटुर्यजति । बटुर्ब्राह्मणो यजति यज्ञं करोति । एवं पटुरत्र वर्तते । सूत्रं ( रेफ० ) रेफप्रकृत्या उत्पन्नो वा रेफ एव प्रकृतिर्मूलकारणं यस्य स रेफप्रकृतिकस्तस्य । ६–१ ( ह्रस्य ) खप ७–१ ( अ इ ए ) वा । ३–१ । ( अव्य० ) रेफप्रकृतिकस्य विसर्जनीयस्य वा रेफो भवति खपे परे । उदा० । गिर अग्रे पतिः । ( य्वोर्विहसे ) गि इत्यस्य गी । ( स्रो० ) गीः ( रेफप्र० ) अनेन एकत्र रेफः । ( राद्य० ) जल० । अन्यत्र ( कुप्वो ᳲक ᳲपौ वा ) गीर्पतिः गीᳲपतिः गीःपतिः एवं रूपत्रयं । एवं धूर्पतिः धूᳲपतिः धूःपतिः । इत्यादि ।

**( रः ) रेफसंबंधिनो विसर्जनीयस्य रेफो भवत्यबे परे । प्रातः अत्र प्रातरत्र । अंतः गतः अंतर्गतः ( रि लोपो दीर्घश्च ) रेफस्य रेफे परे लोपो भवति पूर्वस्य च दीर्घः । पुनः रमते पुना रमते । शुक्तिः रूप्यात्मना भाति शुक्ती रूप्यात्मना भाति ।**

सूत्रं ( रः ) ६–१ स्वर० । ( स्रो० ) रेफसंबंधिनो रेफाज्जातस्य[1] विसर्जनीयस्य रेफो भवति अबप्रत्याहारे परे । उदा० । प्रातर् अग्रे अत्र । अंतर् अग्रे गतः । उभयत्रापि ( स्रो० ) ततः ( रः ) इत्यनेन पुनरपि रेफः । स्वर० । प्रातरत्रागंतव्यं । अंतर्गतः । एवं स्वः गतः स्वर्गतः । पुनः आगतः पुनरागतः । सूत्रं ( रि० ) र् । ७–१ स्वर० ( लोपः ) १–१ ( स्रो० ) अग्रे दीर्घः पूर्व ( हवे । उ ओ ) दीर्घ १–१ ( स्रो० ) दीर्घ अग्रे च १–१ ( अव्य० ) प्राक् ( विसर्जनीयस्य सः । स्तोः श्चुभिः श्चुः ) सिद्धं । सूत्रं चतुःपदं । रेफेति वृत्तिः सुगमा । पुनः अग्रे रमते ( रः ) इति रेफः । ( रिलोपः० ) इति रलोपः पूर्वस्य च दीर्घः । न इत्यस्य ना । शुक्तिः अग्रे रूप्यात्मना भाति ( नामिनो रः । रि लोपो० ) पूर्वस्य च दीर्घः । शुक्ती रूप्यात्मना भाति । शुक्तिः रजताकारेण भासते इत्यर्थः । एवं हरी राजते । शंभू रमते ।

**( सैषाद्धसे ) सशब्दादेषशब्दाच्च परस्य विसर्जनीयस्य लोपश्च भवति हसे परे । सः चरति स चरति । एषः हसति एष हसति ।**

सूत्रं ( सैषा० ) स च एष च सैषं तस्मात्सैषात् । ५–१ । ( ङसिरत् । सवर्णे० ) हसे । ७–१ ( अ इ ए ) मध्ये ( हो झभाः । चपा अबे० ) अत्र समासे कृते तदेतदोर्हसे इति संभवेऽपि ( सैषाद्धसे ) इति यत् सूत्रं कृतं ततः तैः एतैः सकः एषकः । न सः असः इत्यादौ हसे परे विसर्गलोपश्प्राप्तिनिवारणार्थमित्यर्थः । केचित्पुनराहुः

---

१ रेफाज्जातस्येत्यन्यत्र पाठः ।

सः इति पृथक्पदं पंचम्येकवचनांतं सांकेतिकं । एषात्पंचम्येकवचनं । हसे सप्तम्यंतं । स एषात् इत्यत्र ( आदबे लोपश् ) इति विसर्गलोपशं विधाय पश्चात् ( ए ऐ ऐ )

**( सैषादिति संहिता ) सैष दाशरथी रामः सैष राजा युधिष्ठिरः ॥ सैष कर्णो महात्यागी सैष भीमो महाबलः ॥ १ ॥ इत्यादौ पादपूरणे संध्यर्था ज्ञेया । यदुक्तं लौकिकायेह तद्वेदे बहुलं भवेत् । सेमां भूम्याददे सोषामित्यादीनामदुष्टता ॥ २ ॥**

नन्वत्र लोपशि कृते पुनः संधिः कथं कृतः इत्यग्रे वक्ष्यति । सैषादिति संहितेत्यादिना तद् एतद् उभयत्रापि । १-१ ( त्यदादेष्टेरः स्यादौ ) इति दलोपः । ( स्तः ) इत्युभयत्रापि तस्य सः । एस इत्यत्र ( किलात्षः सः० । स्नो० ) तदेतदोर्निष्पन्नाभ्यां सएषशब्दाभ्यां इत्यर्थः । शेषं कंठ्यं । उदा० । सः अग्रे चरति । एषः अग्रे हसति । उभयत्रापि ( सैषाद्धसे ) इति विसर्गलोपश् ( सैषाद्धसे ) इति सूत्रे ऋजुतया कर्त्तव्ये सैषादिति यत्सूत्रमध्ये या अघटमाना अकारैकारयोः ( ए ऐ ऐ ) इति संहिता संधिर्दर्शिता सा सएषशब्दयोः । सैष दाशरथी रामः इत्यादिअष्टाक्षरात्मकपादपूरणार्थं । लोपशि कृतेपि यः ( ए ऐ ऐ ) इति संधिर्भवति तज्ज्ञापनार्थमित्यर्थः । श्लोकः । सैष० । स अग्रे एषः ( आदबे लोपश् । ए ऐ ऐ ) इति संधिर्भवति । एवमपरपादत्रयेऽपि । स एष दाशरथिः । दशरथस्यापत्यं दाशरथिः दशरथपुत्रो रामो वर्त्तते । स एष युधिष्ठिरो राजा युधि संग्रामे स्थिरः युधिष्ठिरः ( किलात्षः सः कृतस्य ) इति षत्वं ( ष्टुभिः ष्टुः ) स एष कर्णः राजा महात्यागी महादानी वर्त्तते। स एष भीमो भीमपांडवः महाबली अतिबलिष्ठो वर्त्तते इत्यादि । अर्थः सुगमः ॥ १ ॥ इत्यादौ पादपूरणे संध्यर्था । पादपूरणे यः संधिः स एव अर्थः प्रयोजनं यस्याः सा । पुनः वैदिकप्रयोगविशेषमाह। यदुक्तं०। यत्सूत्रं इहास्मिन् शास्त्रे लौकिकाय प्रयोगाय व्याकरणप्रसिद्धोदाहरणसाधनायोक्तं सूत्रादि तद्वेदे छंदसि बहुलं अन्यथा भवति अनिश्चितं विभजनतया भवेत् । क्वचिद्भवति क्वचिन्न भवतीत्यर्थः । उदाहरणं । सः अग्रे इमां ( आदबे लोपश् । अ इ ए ) भूमिः अग्रे आददे छांदसत्वात्क्वचिन्नामिनोप्यबे विसर्गलोपश् । ततः ( इ यं स्वरे ) भूम्याददे। सः अग्रे उषां ( आदबे लोपश् । उ ओ। ) इत्यादीनामार्षप्रयोगाणां वैदिकप्रयोगाणामदुष्टता न दोष इत्यर्थः । स इमां भूमिमपुनात् भूमेश्च रसं आददे ततः स उषां गां आनयामास ॥ २ ॥

**क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव ।**

---

१ ( नामिनो लोपः ) नामिनः परस्य विसर्जनीयस्य लोपो भवति क्वचिदबे परे। भूमिः आददे बीजं भूम्याददे बीजं इ० पा० ।

**विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकं वदंति ॥ ३ ॥**

बाहुलकं कतिधेत्याह । क्वचिदिति । क्वचित्प्रयोगे अनुक्तस्यापि प्रवृत्तिः अप्राप्तस्य असंभवतः सूत्रस्य प्रापणं प्रवृत्तिः प्राप्तिः । यथा लोपशि पुनर्न संधिरिति निषिद्धत्वेपि (अ इ ए) इति संधेः प्राप्तिः । क्वचित्प्रयोगांतरे उक्तस्याप्यप्रवृत्तिः कथितस्यापि सूत्रस्य निषेधः । यथा भूमिः अग्रे आददे इत्यत्र (नामिनो रः) इत्यस्य अप्राप्तिः । क्वचिद्विभाषा विकल्पः । यथा वेदे । देवैः देवेभिः । गवेशः गवीशः । क्वचित् अन्यदेवोक्तं अन्यदेव भवति । एवममुना प्रकारेण विधेर्व्याकरणसूत्रस्य विधानं करणं बहुधा बहुप्रकारं समीक्ष्य दृष्ट्वा बाहुलकं वैदिकप्रयोगं चतुर्विधं वदंति कथयंति । बुधा इत्यध्याहारः । वैदिकं चतुर्धोक्तं ॥ ३ ॥

**वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ । धातोस्तदर्थातिशयेन योगस्तदुच्यते पंचविधं निरुक्तं ॥ ४ ॥**

अथ लौकिकप्रयोगः कतिधा भवतीत्याह । वर्णा० । एको वर्णागमः च पुनर्वर्णविपर्ययः । पूर्वोच्चारितस्य स्थाने परवर्णोच्चारणं परवर्णस्य स्थाने पूर्ववर्णोच्चारणं वर्णविपर्ययः । पुनर्द्वावपरौ भेदौ कौ तौ वर्णविकारवर्णनाशौ । पूर्वावस्थापरित्यागेन अवस्थांतरापादनं विकारः । सर्वथा लोपो नाशः । वर्णानामक्षराणां विकारनाशौ वर्णविकारनाशौ । पंचमश्च भेदः धातोस्ताभ्यां वर्णविकारवर्णनाशाभ्यां कृत्वा पुनर्धातोरर्थातिशयेन च कृत्वा धातोर्योऽर्थातिशयः अधिकता कश्चिद्विशेषो य अर्थातिशयस्तेन च यो भवति स योग इति नाम्ना पञ्चमो भेदः । तत्तस्मान्निरुक्तं निश्चयेन उक्तोऽर्थो यस्य तन्निरुक्तं व्याकरणोदाहरणम् ॥ ४ ॥

**वर्णागमो गवेंद्रादौ सिंहे वर्णविपर्य्ययः ।**
**षोडशादौ विकारः स्यात् वर्णनाशः पृषोदरे ॥ ५ ॥**

पंचविधमुच्यते तानेव पंच व्यंजयति । अथ लौकिकः प्रयोगः कतिधा भवतीत्याह । वर्णा० । गवेन्द्रादौ वर्णागमः गवादेरवर्णागमोऽक्षादाविति । एवं हन् हिंसागत्योः । हन् अप्रत्ययः सकारागमः । हिंस इति सिंहे वर्णविपर्ययो भवति । यथा हिंस् हिंसायां । मूर्त्तौ घनः इति अप्रत्ययः । हिंस इति स्थिते हिनस्तीति विग्रहे ततः हिंस इति शब्दे हस्य स्थाने सः सस्य स्थाने हः एवं वर्णविपर्य्ययः सिंह इति सिद्धं । षोडशादौ यथा । षट् च दश च इति विग्रहे षष् दश अत्र (षष उदौ डः) षस्य उः दस्य ड इति वर्णविकारः । ततः (उ ओ) षोडश इति विकारोदाहरणं । गूढः अग्रे आत्मा । बंधुजनः अग्रे आजुहाव । कुरवः अग्रे आत्महितं इत्यादिषु वर्णविकारं आकारस्य अकारं विधाय (अतोत्युः । उ ओ ।

---

१ कथं-इति पुस्तकान्तरे ।

एदोतोतः ) गूढोत्मा । बंधुजनो जुहाव । कुर्वोत्महितं । पृषोदरे वर्णनाशः । यथा पृषत् अग्रे उदरः तकारस्य नाशो लोपः ( उओ ) पृषोदरः । पृषंति बिंदवः उदरे यस्य स पृषोदरः मृगः अथवा पृषन्मृगस्तस्योदरमिव उदरं यस्य स पृषोदरः ॥ ५ ॥

**वर्णनाशविकाराभ्यां धातोरातिशयेन यः । योगः स उच्यते प्राज्ञैर्मयूरभ्रमरादिषु ॥ ६ ॥ इति विसर्गसंधिः समाप्तः ।**

वर्ण० । वर्णस्य अक्षरस्य नाशविकाराभ्यां कृत्वा धातोः अतिशयेन अर्थविशेषेण कृत्वा यः उत्पद्यते स प्राज्ञैः पंडितैर्योग इत्युच्यते । क्व मयूरभ्रमरादिषु मयूरः भ्रमरः इत्याद्युदाहरणेष्वित्यर्थः । यथा ' रु शब्दे ' रुरु एकत्र महीपूर्वः अन्यत्र भ्रमन्पूर्वः । मह्यामतिशयेन रौति जल्पतीति मयूरः । भ्रमन् सन् अतिशयेन रौतीति भ्रमरः । ( नाम्नि च ) इति डः प्रत्ययः । डित्वाट्टिलोपः । स्वर० एकत्र विकारः । हीस्थाने यू अन्यत्र वर्णनाशः नकारस्य नाशः लोपः । मयूरः । भ्रमरः । इति सिद्धं । अन्येषां मते तु एते पंचापि पृषोदरादिभेदा एव ॥ ६ ॥ इति विसर्गसंधिः संपूर्णः ॥

**अथ विभक्तिर्विभाव्यते । सा द्विधा स्यादिस्त्यादिश्च । ( विभक्त्यंतं पदं । ) तत्र स्यादिर्विभक्तिर्नाम्नो योज्यते । ( अविभक्ति नाम । ) विभक्तिरहितं धातुवर्जितं चार्थवच्छब्दरूपं नामोच्यते । कृत्तद्धितसमासाश्च प्रातिपदिकसंज्ञका इति केचित् ।**

अथेति पंचमसंधिकथनानंतरं विभक्तिर्विभाव्यते कथ्यते । विभज्यंते पृथक् क्रियंते कर्तृकर्म्मादयो यया सा विभक्तिः । सा विभक्तिर्द्वेधा द्विप्रकारा । एका स्यादिः सि औ जस् इत्यादिका । अपरा त्यादिः तिप् तस् अंति इत्यादिका । विभक्तेः प्रयोजनमाह । सूत्रम् ( विभक्त्यंतं पदं । ) विभक्तिरंते यस्य तत् विभक्त्यंतं । यस्यांते विभक्तिस्तत्पदमुच्यते । तत्र विभक्तिद्वयमध्ये स्यादिर्विभक्तिर्नाम्नो अग्रे योज्यते स्थाप्यते दीयते । त्यादिर्विभक्तिर्धातोः अग्रे प्रोज्यते स्थाप्यते । नामलक्षणमाह । सूत्रम् । ( अविभक्ति नाम ) नास्ति विभक्तिर्यस्य तत् अविभक्ति । १-१ । ( नपुंसका० ) सेर्लोपः । नामन् । १-१ । ( नपुंसका० नाम्नो नो० ) नस्य लोपः सिद्धं । द्विपदं । विभक्त्या रहितं धातोः भ्वादेः पृथक्भूतं अर्थयुक्तं शब्दरूपमकारादिवर्णरूपं तन्नाम उच्यते । शब्दरूपं नामेत्युक्ते पदस्यापि नामसंज्ञा स्यात्तन्निवारणार्थं अविभक्ति इति तथा सति धातावतिव्याप्तिस्तन्निवारणार्थं धातुवर्ज्जमिति । तथा सति निरर्थकस्य टसइत्यादिध्वनेर्नामत्वं तन्निवारणार्थं अर्थवदिति ईदृग्लक्षणं नामोच्यते । पुनः कृत्तद्धितसमासाः सविभक्तिका अपि नामसंज्ञकाः स्युः केचिदित्याहुः । कृतः तृतीयवृत्तिप्रत्ययाः । तदंताः शब्दाः धातवः

१ असौ-इति पाठः । २ एका-इति पाठः पुस्तकान्तरे ।

तद्धितांताः समासाश्च नामसंज्ञका भवंति इति केचिदिति पाणिन्याचार्या इति वदंति।एते सर्वेपि प्रातिपदिकसंज्ञका नामसंज्ञकाः उच्यंते तन्मते प्रातिपदिकं इति नामपर्यायः ।

( तस्मात् । सि औ जस् । अम् औ शस् । टा भ्यां भिस् । ङे भ्यां भ्यस् । ङसि भ्यां भ्यस् । ङस् ओस् आम् । ङि ओस् सुप् । ) तस्मान्नाम्नः पराः स्यादयः सप्त विभक्तयो भवंति । तत्राप्यर्थमात्रैकत्वविवक्षायां प्रथमैकवचनं सि । देव सि इति स्थिते । इकार उच्चारणार्थः । ( स्रोर्विसर्गः । ) सकाररेफयोर्विसर्जनीयादेशो भवत्यधातो रसे पदांते च । देवः । द्वित्वविवक्षयामौ । ( ओ औ औ ) देवौ । बहुत्वविवक्षायां प्रथमा बहुवचने जस् । जकारस्येत्संज्ञा । इत्संज्ञायां तस्य लोपः । प्रयोजनं च जसीति विशेषणार्थः । देव अस् इति स्थिते । दीर्घविसर्गौ देवाः ।

सूत्रं तस्माद्यावत्सुप् । तद् । ५-१ ( त्यदादेष्टेरः० ) दलोपः ( ङसिरत् । अतः ) इति स्मडागमः ( सवर्णे० ) सिश्च औश्च जस् च यावत्सुप् च । १-६ । सांके० । यद्वा तस्मादिति पंचम्येकवचनांतं अग्रे सि औ जस् इत्येकविंशतिरपि सांकेतिकप्रथमैकवचनांतानि पदानि एवं द्वाविंशतिपदं सूत्रं । अष्टपदमित्यपि केचित् । सुप् इत्यत्र पकारः पाणिनीयानां सु औ जस् इति प्रथमैकवचनस्यापि सु इति संज्ञा तस्माद्भेदज्ञापनार्थः सुप्प्रत्याहारार्थश्च । अत्र तु सुखमुखोच्चारणार्थ एव तस्मात्पूर्वोक्तान्नाम्नः पराः एताः पूर्वोक्ताः स्यादयः सप्त विभक्तयो भवन्ति । तत्र सि औ जस् प्रथमा । १ । अम् औ शस् द्वितीया । २ । टा भ्यां भिस् तृतीया । ३ । ङे भ्यां भ्यस् चतुर्थी । ४ । ङसि भ्यां भ्यस् पंचमी । ५ । ङस् ओस् आम् षष्ठी । ६ । ङि ओस् सुप् सप्तमी ॥ ७ ॥ एकैकस्या विभक्तेस्त्रीणि त्रीणि वचनानि एकवचनद्विवचनबहुवचनसंज्ञानि भवंति तत्रापि नाम्नि सप्तसु विभक्तिषु वा अर्थमात्रस्यैकत्वविवक्षायां अर्थमात्रस्य घटपटादेः एकस्य वक्तुमिच्छा क्रियते यत्र तत्र प्रथमैकवचनं सि दीयते । तत्र प्रथमं देवशब्दः । दिवु क्रीडायां । दीव्यतीति देवः । ( पचनंदिग्रहादेः० ) इति अप्रत्ययः गुणः देव इति जातं ततः देव सि इति स्थिते सति इकार उच्चारणार्थः ( सेर्डाधे । सेरा ) इति सूत्रे विशेषणार्थश्च इत्संज्ञत्वात् इकारलोपः देव स् इति स्थिते सूत्रं ( स्रो० ) स् च र् च स्रौ तयोः स्रोः । ६-२ । स्वर० ( स्रो० ) विसर्गे । १-१ ( स्रो० ) द्विपदं मध्ये ( नामिनो० ) सकारस्य रेफस्य च विसर्गो भवति अधातोः नाम्नः शब्दस्य

१ बहुवचनं-इ० पा० । २ विशेषणमित्येकत्र । विशेषणार्थमित्यन्यत्र । ३ अतः इ० पा० ।

रसे परे चकारात्पदांते तु धातुनाम्नोः उभयोरपि नाम्नः सकाररेफयो रसे परे पदांते च विसर्गादेशः। चकारात्पदांते धातोरपि सकाररेफयोर्विसर्गादेशः। यथा अचकाः अबिभः। रसे परे धातोर्न। यथा आस्ते बिभर्ति इत्यादौ। अनेन विसर्गः। देवः इति सिद्धं। द्वित्वविवक्षायां औ। द्वयोर्वक्तुमिच्छा यत्र क्रियते तत्र द्विवचनं। यथा देवश्च देवश्चेत्येकशेषे ( सरूपाणामेकशेष एकविभक्तौ ) इति देव औ इति स्थिते। (ओ औ औ) देवौ। एवं देवश्च देवश्च देवश्चेति बहूनां उक्तौ प्रथमाबहुवचनं। १-३। जस्। जकारो जसीति सूत्रविशेषणार्थः। अन्यथा असीत्युच्यमाने शस् ङस् संबंधिनोऽप्यस ईकारः स्यात्। जकार इत्संज्ञकः। देव अस् ( सवर्णे०। स्रो० ) देवाः॥

**[ अकाराज्जसो असुक्क्वचिद्वक्तव्यः ] देवासः ब्राह्मणासः। द्वितीयैकवचने देव अम् इति स्थिते। ( अम्शसोरस्य ) समानादुत्तरयोरम्शसोरकारस्य लोपो भवति ) अधातोः। देवं। देवौ। बहुवचने देव शस् इति स्थिते। शकारः शसीति वि[3]शेषणार्थः।**

विशेषमाह। ( अकाराज्जसो असुक् क्वचिद्वक्तव्यः ) क्वचित्प्रयोगांतरे अकारात्परस्य जसः असुक् आगमो भवति छंदसि वेदविषये। देव १-३। अनेन असुक् आगमः। किस्वादंते स्वर० ( स्रो० सवर्णे० ) देवासः कर्मैकत्वविवक्षायां द्वितीयैकवचने देव अम् सूत्रं। अम् च शस् च अम्शसौ तयोः अम्शसोः अम्शस्। ६-२ स्व० ( स्रो० ) अ ६-१ ( ङस्स्य। नामिनो रः ) सिद्धं द्विपदं। समानात्परस्य अम्शस्संबंधिनो अकारस्य लोपो भवति अधातोः अक्विबंतात् शब्दादित्यर्थः। अनेन अकारलोपः ( मोनु० ) देवं देवौ पूर्ववत्। द्वितीयाबहुवचने शस् शकारः शसीति विशेषणार्थः इत्संज्ञकः उच्चारणमात्रः अस् लिख्यते। अम्शसोरित्यकारलोपः॥

**( सो नः पुंसः ) पुंल्लिंगात्समानादुत्तरस्य शसः सकारस्य नकारादेशो भवति (शसि) शसि परे पूर्वस्य स्वरस्य दीर्घो भवति। यदादेशस्तद्वद्भवति नतु वर्णमात्रविधौ। देवान्। तृतीयैकवचने देव टा इति स्थिते। टकारोनुबंधष्टेनेति विशेषणार्थः।**

सूत्रं स् ६-१ स्वर० ( स्रो० ) न। १-१ ( स्रो० ) पुंस् ५-१ स्व० ( स्रो० ) पुंल्लिंगे वर्तमानात्समानादुत्तरस्याग्रतः शसः सकारस्य नकारादेशो भवति। सूत्रं। शस

१ शब्दयोः-इ० पा०। २ यद्वा इ० पा०। ३ कार्यार्थः-इत्यन्यस्मिन्पुस्तके पाठः।

७–१ स्वर० सिद्धं एकपदं। पूर्वेन्हस्वस्य दीर्घो भवति शसि परे यदादेशस्तद्वद्भवति नतु वर्णमात्रविधाविति न्यायात्। पूर्वस्य दीर्घः। देवान्। कर्तृकरणयोः एकत्वविवक्षायां तृतीयैकवचने। ३–१। देव टा इति स्थिते सति टकारोऽनुबंधः। उच्चरितप्रध्वंसिनो ह्यनुबंधा इति टकारस्य लोपः टेन इति सूत्रार्थश्च। आ इति स्थिते।

**( टेन ) अकारात्परष्टा इन भवति। देवेन ( आद्भि ) अकारस्य आकारादेशो भवति भकारे परे। देवाभ्यां। देव भिस् इति स्थिते ( ब्भ्यः ) अकारात्परस्य भिसो अकारस्य अकारादेशो भवति ( अ इ ए ) देव एस् इति स्थिते ( ए ऐ ऐ ) वृद्धिविसर्ज्जनीयौ। देवैः॥ [ अकारस्य भिसि छंदस्येकारो वा वक्तव्यः ] देवेभिः। कर्णेभिः॥**

सूत्रं ( टेन ) टा १–१ सांके० इन १–१ सांके०।अकारांतशब्दात्परतः टाविभक्तेः इनादेशो भवति सस्वर एव भवतीति (अ इ ए) देवेन। देव ३–२। भ्यां। सूत्रं (अद्भि ) अत् १–१ ( हसे प० ) भ् ७–१ स्वर०। ( चपा अबे जबाः। वाऽऽसु ) इति सूत्रादाकारस्यानुवृत्तिः। केचित्तु ( आद्भि ) इति पठंति तन्मते आ अत् भि इति त्रीणि पदानि अकारस्य स्यादिविभक्तिसंबंधिभकारे परे आकारो भवति। देवाभ्यामित्ति सिद्धं। तृतीयावहुवचने देव ३–३ भिस् इति स्थिते सूत्रं (ब्भ्यः) अथवा (भ्भ्यः) भ् भि अः। त्रिपदं। भ् ६–१ सांके०। भि ६–१। सांके०। १–१ ( स्रो०। झबे जबाः ) इति भस्य बः ( इ यं स्वरे। ) स्वर० इति सूत्रसाधना। वृत्तिः कंब्भ्या। देशैकग्रहणेन देशिग्रहणं तेन भि इत्युक्ते भिसो ग्रहणं। पूर्वं भकारेकारौ विश्लेष्य वियोज्य इकारात्पूर्वं भकारं विधाय पश्चात् भस्य अः ( अ इ ए। एऐ ऐ। स्रो०) देवैरिति सिद्धं। अत्र तु भिस् ऐस् इत्येवं सूत्रकरणं युक्तं।अकारस्य भिसि परे छंदसि वैदिकोदाहरणविषये एकारो वा वक्तव्यः। देवेभिः कर्णेभिरिति वैदिकप्रयोगः।

**चतुर्थ्येकवचने देव ङे इति स्थिते॥ ङकारो ङित्कार्यार्थः सर्वत्र ( ङेरक् ) अकारात्परस्य ङेइत्येतस्य अगागमो भवति॥ कित्त्वादंते ( ए अय् ) दीर्घः। देवाय। देवाभ्यां। पूर्ववत्। चतुर्थीवहुवचने देव भ्यस् इति स्थिते ( ए स्भि वहुत्वे ) अकारस्य एत्वं भवति सकारे भकारे च परे वहुत्वे सति। देवेभ्यः। पंचम्येकवचने देव ङस् इति स्थिते। ( ङसिरत्।)**

अकारात्परो ङसिरद्भवति । दीर्घः । देवात् । देवाभ्यां । देवेभ्यः । षष्ठ्येकवचने देव ङस् इति स्थिते ( ङस् स्य ) अकारात्परो ङस् स्य भवति । देवस्य ॥

संप्रदानैकत्वविवक्षायां चतुर्थ्येकवचने देव ङे इति स्थिते॥ ङकारो ङित्कार्यार्थः इत्संज्ञकश्च । सर्वत्र ङेङसिङस्ङिषु इत्यर्थः।सूत्रं ( ङेरक् ) ङे। ६–१ ( ङसिङसोरस्य ) इत्याकारलोपः । ( स्रो० ) अक् । १–१ ( हसे पः ० । नामिनो० । ) स्व० सिद्धं । अकारात्परस्य ङे इत्येतस्य अगागमो भवति ( कित्त्वादंते । ए अय् ) सवर्णे० स्वर० देवाय । ४–२ ( अद्वि ) देवाभ्यां । ४–३ देव भ्यस् इति स्थिते सूत्रं । ( ए स्भि बहुत्वे ) ए । १–१ सांके० । स् च भ् च स्भ् तास्मिन् स्भि ७–१ स्वर० ( बहुत्वे ७–१ । अइए ) अकारस्य एत्वं एकारो भवति बहुवचने सति सकारभकारादौ विभक्तावित्यर्थः देवेभ्यः । अपादानैकत्वविवक्षायां पंचम्येकवचने देव ५१ अस् इति स्थिते सूत्रं ( ङसिरत् ) ङसि १–१ ( स्रो० ) अत् १–१ ( हसे पः० नामिनो० ) सिद्धं । अकारात् उत्तरो यो ङसिः स अत् भवति ( सवर्णे० ) देवात् । ५–२ द्विवचने ( अद्वि० ) देवाभ्यां बहुवचने देवेभ्यः ( ए स्भि बहुत्वे । स्रो० ) संबंधैकत्वविवक्षायां ६–१ । देव अस् । सूत्रं ( ङस्स्य ) ङस् १–१ ( हसे० ) स्य । १–१ ( स्रो० ) अकारादित्यादिर्वृत्तिः कंठ्या । देवस्य ॥ ६–२ देव ओस् इति स्थिते सति ।

( ओसि । ) अकारस्य ओसि परे एत्वं भवति ( ए अय् ) देवयोः । ( नुडामः ) समानात्परस्यामो नुडागमो भवति । टित्त्वादादौ । उकार उच्चारणार्थः ( नामि । ) नामि परे पूर्वस्य दीर्घो भवति । देवानाम् । सप्तम्येकवचने देव ङि इति स्थिते ( अ इ ए ) देवे । ( ओसि ) देवयोः पूर्ववत् । सप्तमीबहुवचने देव सुप् इति स्थिते पकारस्येत्संज्ञायां लोपः एस्भि बहुत्वे ) इत्येकारः । ( किलात्षः सः कृतस्य ) कवर्गादिलाच्च प्रत्याहाराद्दुत्तरस्य केनाचित्सूत्रेण कृतस्य सकारस्य षकारादेशो भवति । देवेषु ॥

सूत्रं ( ओसि ) ओस् ७–१ स्वर० अकारस्य ओसि परे एत्वं एकारो भवति ( ए- अय् ) स्वर० ( स्रो० ) देवयोः । ६–३ । देव आम् । सूत्रं नुट् । १–१( हसे पः० ) आम् ६–१ स्वर० ( स्रो० चपा अबे० ) सिद्धं । पुंसि समानात् ह्रस्वात् समानात्

दीर्घात्तु आबंतेषु ईकारांतेषु नित्यस्त्रीलिंगे वर्त्तमानेष्विति व्याख्येयं । समानात् परस्य आमः षष्ठीबहुवचनस्येति व्याख्येयमन्यथा ( आम्ङेः ) इत्याम् ( स्त्रियां य्वोः ) इत्याम् ( आमौ ) इत्यप्याम् ( किमोव्ययात् ) इत्याम् ( कासादिप्रत्ययांतात् ) इत्याम् वर्तते तत्रातिव्याप्तिः स्यात्तेन षष्ठीबहुवचनस्यामो नुट् आगमो भवति । अधातोरेवेत्यनुवर्तितव्यम् । तेन अधातेः अक्विबंताच्छब्दात् । टित्वादादौ । उकार उच्चारणार्थः । इति न् इत्यागमः । आमो नुट् इति कर्त्तव्ये नुडाम इति विपरीतकरणं नुटो नित्यत्वसूचकं । तेन स्त्रीणां वारीणामित्यत्र ( नुडामः ) इत्येव स्यात् ( नामिनः स्वरे ) इति न भवति । सूत्रं ( नामि)नुट्सहितः आम् नाम् तस्मिन् नामि ७–१ । स्वर० सिद्धं । नुडागमसहिते आमि परे पूर्वस्य दीर्घो भवति इति दीर्घः। स्वर० ( मोनु० ) देवानां । आधारैकत्वविवक्षायां ७–१ । देव ङि ( अइए ) । ७–२ षष्ठीद्विवचनवत् । देवे[2] देव देवेत्येकशेषे सप्तमी ७–३ देव सु इति स्थिते ( ए स्भि बहुत्वे ) ततः । सूत्रं ( क्विलात्षः सः कृतस्य ) कुश्च इलश्च क्विलं तस्मात् । ५–१ । ( ङसिरत् । सवर्णे० ) ष । १–१ स् ( स्रो० ) स् । ६–१ । स्वर० । ( स्रो० ) कृत ६–१ ( ङस्स्य ) चतुष्पदं सूत्रं । सिद्धं । वृत्तिः कंठ्या । न वरं । केनचित्सूत्रेण कृतस्यैव सकारस्य षकारो भवति न त्वकृतस्य स्वाभाविकस्य अंते स्थितस्यापि सस्य षत्वं न भवति । यथा हरिस्तत्रेत्यादौ न षत्वं । तथा नुम्विसर्गांतरेपि षत्वं यथा हवींषि । हविःषु । इत्यादि पूर्वं हविस्शब्दोस्ति इत्यर्थः । अत्र सः षः इति कर्त्तव्ये षत्वः सः इति विपरीतत्वेन कृतं तत् क्वचित् क्विलं विनापि सस्य षत्वज्ञापनार्थं यथा अवष्टंभः । अंबष्ठः । अभ्यषुणोत् इत्यादि । देवेष्विति सिद्धं ।

**( आमंत्रणे सिर्धिः ) आमंत्रणमाभिमुखीकरणं तस्मिन्नर्थे विहितः सिर्धिसंज्ञो भवति ।**

संबोधनमाह । आमंत्रणे० । आमंत्र्यते आहूयते पुरुषोऽनेनेत्यामंत्रणं तस्मिन् । ७–१ । ( अ इ ए ) सि । १–१ । ( स्रो० ) । धि । १–१ । ( स्रो० । राद्यपो द्विः ) । पूर्वं ( नामिनो रः) जलतुंबि० त्रिपदं सूत्रमिदं सिद्धं । आमंत्रणमिति कोऽर्थः । आभिमुखीकरणं । अनभिमुखः आसमंतात्प्रकारेण अभिमुखः क्रियते अनेनेति आभिमुखीकरणं तस्मिन्नर्थे विहितः कृतो यः सिः प्रथमैकवचनरूपः स धिसंज्ञो भवति । उदाहरणं । देव । १–१ । स् ।

---

१ ग्रहणं इति पुस्तकान्तरे पाठो दृश्यते । २ देवे च देवे च देवे च-इत्येकत्वेत्याद्यन्यास्मिन्पुस्तके । ३ क्विलः-इत्यपि पाठः ।

**( समानाद्धेर्लोपोऽधातोः ) समानादुत्तरस्य धेर्लोपो भवति अधातोः ॥**

धिसंज्ञायां किं कार्यं तदाह । सूत्रं ( समाना० ) समान । ५–१ । ( ङसिरत् । सवर्णे० ) धि । ६–१ । ( ङिति । ङसिङसोरस्य ) इत्यकारलोपः ( झबे जबाः ) तस्य दः । स्वर० । लोपः १–१ । ( स्रो० । नामिनो रः ) जलतुं० । अधातोः न धातुरधातुस्तस्मात् । अधातु । ५–१ । ( ङिति । ङसिङसोरस्य ) इत्यकारलोपः । ( अतोत्युः । उओ । एदोतोतः) चतुःपदं सिद्धं । समानादुत्तरस्य धेर्लोपो भवति । अत्र समानादिति न्हस्वसमानात्परस्येति व्याख्येयं । अन्यथा । हे हाहाः । हे हूहूः । हे वातप्रमीः । इत्यादौ विरुध्यति । अधातोः अक्विबंतात् शब्दात् । अक्विबंतो अधातुरुच्यते क्विबंतश्च शब्दो धातुरित्यभिप्रायः । अनेन धिलोपः । पूर्वं हे शब्दः ।

**[ आभिमुख्याभिव्यक्तये हेशब्दस्य प्राक् प्रयोगः ] हे देव । हे देवौ । हे देवाः । एवं घटपटस्तंभकुंभादयोऽप्यकारांताः पुँल्लिगाः ।**

एतद्धेतुः । अभिमुखस्य भाव आभिमुख्यं संमुखत्वं तस्याभिव्यक्तये प्रकटीकरणाय हेशब्दः प्राक् आदौ प्रयुज्यते इत्यर्थः । हे देव । द्विवचने ( ओ औ औ ) देवौ । बहुवचने देव अग्रे जस् इति स्थिते जकारस्येत्संज्ञायाम् लोपः ( देव अस् । सवर्णे० ) (स्रो०) हे देवाः। अन्यानपि शब्दानाह ( एवं घटपटादयः ) एवं कंठ्यं । अत्र काव्येन विभक्त्यर्थं दर्शयति " वृक्षस्तिष्ठति कानने कुसुमिते वृक्षं लता संश्रिता वृक्षेणाभिहतो गजो निपतितो वृक्षाय देयं जलं । वृक्षादानय मंजरीं कुसुमितां वृक्षस्य शाखोन्नता वृक्षे नीडमिदं कृतं शकुनिना हे वृक्ष किं पश्यसि ॥ १ ॥ वीरः सर्वसुरासुरेंद्रमहितो वीरं बुधाः संश्रिता वीरेणाभिहतः स्वकर्मनिचयो वीराय नित्यं नमः । वीरात्तीर्थमिदं प्रवृत्तमतुलं वीरस्य घोरं तपो वी रे श्रीधृतिकीर्तिकांतिनिचयः श्रीवीर भद्रं दिश ॥ ॥ २ ॥ शिष्यः कुरुते पृच्छां बहुना विनयेन तत्त्वबोधाय । आगत्य निजस्थानाद्धर्माचार्यस्य पादांते ॥ ३ ॥ " इत्यादि ।

**अकारांतानामपि सर्वादीनां तु विशेषः । सर्व । विश्व । उभ । उभय । अन्य । अन्यतर । इतर । डतर । डतम । कतर ।**

---

१ एवं " रामो राजमणिः सदा विजयते रामं रमेशं भजे रामेणाभिहता निशाचरचमू रामाय तस्मै नमः । रामान्नास्ति परायणं परतरं रामस्य दासोऽस्म्यहं रामे चित्तलयः सदा भवतु मे भो राम मां पालय ॥ १ ॥ " इत्यादयः श्लोका बहवः सर्वविभक्तिसूचकाः संति ।

**कतम । सम । सिम । नेम । एक । पूर्व । पर । अवर । दक्षिण । उत्तर । अपर । अधर । स्व । अंतर । त्यद् । तद् । यद् । एतद् । इदम् । अदस् । भवतु । द्वि । किम् । युष्मद् । अस्मद् । एते सर्वादयस्त्रिलिंगाः ।**

पुनर्विशेषमाह । अकारांतानामिति । यद्यपि सर्वादयो अकारांतास्तथापि सर्वादीनां विशेषो देवशब्दात्कश्चिद्भेदोस्ति के ते सर्वादय इत्याह । सर्व विश्व यावद् अस्मद् । विश्वशब्दस्य सकलार्थवाचकत्वे सर्वादित्वं न तु जगद्वाचकत्वे जगद्वाचकत्वे तु कुलशब्दवत् - समः अतुल्यार्थः किंतु सर्वार्थवाचकः । तुल्यार्थत्वे तु राज्ञः समाय इत्यत्र न सर्वादित्वं। सिमः समग्रार्थवाचकः । नेमः खंडवाचकः । पूर्वादीनां तु व्यवस्थायामेव सर्वादित्वं । स्वाभिधेयापेक्षावधिनियमो व्यवस्थेति विकल्पः । स्वस्याभिधेयो यो दिग्देशकालस्वभावस्तमपेक्षते तेनैवापेक्ष्यते इति स्वाभिधेयापेक्ष ईदृशो योऽवधेर्मर्यादाया नियमोऽवश्यंभावोऽवधिभावादभ्रंशो व्यवस्था उच्यते। दक्षिणशब्दस्य प्रावीण्ये शृंगारनायकवाचकत्वे न सर्वादिकार्यं । अन्यत्र दक्षिणदिग्देशवाच्यत्वे सर्वादित्वं । उत्तरशब्दस्य उत्तरदिग्देशवाच्यत्वे सर्वादित्वं प्रतिवाक्ये तु न सर्वादिकार्यं।अधरस्य हीनार्थत्वे सर्वादित्वं न त्वोष्ठवाचकत्वे । स्वशब्दस्य ज्ञातिधनान्यवाचित्वे ज्ञातिधनार्थवर्जं।किंतु आत्मआत्मीयार्थे वाच्ये सर्वादित्वं। "ज्ञाता वात्मनि चात्मीये धने स्वाख्या प्रवर्तते" इति । स्वा ज्ञातयः । स्वानि द्रव्याणि इत्यत्र सर्वादित्वं न अन्यत्र तु स्वस्मै रोचते स्वे पुत्राः स्वस्मै पुत्राय देहि । अत्र सर्वशब्दवत् ।अंतरशब्दस्य बहिर्योगे उपसंख्याने च सर्वादित्वं नान्यत्र । यतः "मध्ये छिद्रे विशेषे च व्यवधाने बहिर्युजि । उपसंव्यानने प्राज्ञाः षडर्थमंतरं विदुः ॥" अंतरस्मै गृहाय । नगरबाह्याय चांडालादिगृहायेत्यर्थः । पुरि तु न भवति । अंतरायै पुरे कुप्यति । चांडालादिबाह्यपुर्यै इत्यर्थः । वस्त्रांतरेणापिहितं वस्त्रं उपसंव्यानं । "अंतरीयं निवसनमुपसंव्यानमित्यपि" तत्रार्थे अंतरे अंतराः वा शाटकाः । अंतरस्मै शाटकाय वस्त्रांतरेण वृताय शाटकायेत्यर्थः । यतः । "सर्वादिः सर्वनामाख्यो न चेद्गौणोऽथवाभिधा । पूर्वादिश्च व्यवस्थायां समोऽतुल्येंतरोऽपुरि । परिधाने बहिर्योगं स्वोऽर्थज्ञात्यन्यवाच्यपि" उभशब्दस्य त्वच्छब्दस्य भवच्छब्दस्य द्विशब्दस्य च तृतीयासमासे तथा हेत्वर्थे सर्वादेः सर्वा विभक्तयो भवंति । तदर्थं ( अव्ययात्सर्वनाम्नष्टेः प्रागकच् । ) इति अकच्प्रत्ययार्थं च सर्वादिमध्ये ग्रहणं। यथा उभौ हेतू उभाभ्यां हेतुभ्यां उभयोः हेत्वोः। त्वत्हेतुः। त्वं हेतुम् । त्वता हेतुना । त्वते हेतवे। द्वौ हेतू । द्वाभ्यां हेतुभ्यां । द्वयोर्हेत्वोः । भवान् हेतुः।भवंतं हेतुं । भवता हेतुना । इत्यादि । तथा अज्ञातौ उभौ उभकौ। एवं द्वकौ।भवकन् । भवकंतौ। भवकंतः । त्वकत् इत्यादि। त्यच्छब्दः प्रायश्छंदस्येव। एते सर्वादय उच्यंते कथ्यंते । त्रिलिंगाः लिंगत्रयधारिणः पुल्लिंगस्त्रीलिंगनपुंसकलिंगाः ॥

तत्र पुँल्लिगत्वे रूपं नेयं। सर्वः। सर्वौ। सर्व जस् इति स्थिते (जसी) सर्वादेरकारांतात्परो जस् ई भवति। (अ इ ए) सर्वे। सर्वं। सर्वौ। सर्वान्। (अम्शसोरस्य। सोनः पुंसः। शसि) पूर्वस्य दीर्घः। तृतीयैकवचने सर्व इन इति स्थिते। (ष्रुनोंणोऽनंते) षकाररेफऋवर्णेभ्यः परस्य नकारस्य णकारादेशो भवति अंते स्थितस्य न भवति सर्वानित्यादौ (अवकुप्वंतरेपि।) अवप्रत्याहारेण कवर्गेण पवर्गेण च मध्ये व्यवधानेऽपि भवति नान्येन। सर्वेण। सर्वाभ्याम्। (अद्भि) इत्यात्वम्। सर्वैः।

तत्र पुँल्लिगे रूपमाह। सर्व सृ गतौ वप्रत्ययः सरति प्रसरतीति सर्व्व। १-१। (स्रो०) सर्व्वः। सर्व्व १-२। (ओ औ औ।) सर्व्वौ। बहुत्वे विशेषकृत्यमाह। सूत्रं। (जसी) जस् १-१। सांके०। ई १-१ सां० सर्ववृत्तिः सुबोधा। (गुरुः शिच्च सर्वस्य) इति गुरुत्वात् सर्वस्य जसः ई भवति। प्रक्रियायां तु (जसः शी) शित्त्वात्सर्वस्य। न वरं। अकारांतग्रहणं भवच्छब्दानिषेधसूचकं। अनेन ई (अइ ए) सर्वे। द्वितीयायां देववत्। तृतीयैकवचने सर्व आ (टेन) इति इनआदेशे कृते (अइ ए) ततः। सूत्रं (ष्रुनोंणोनंते) ष् च र् च ऋश्च ष्रृः तस्मात् ष्रुः ५-१। (ऋतो डः) स च डित् डित्त्वाट्टिलोपः। स्वर०। न् १-१ (स्रो०। नामिनो रः) जल०। ण १-१ (स्रो० हबे। उओ) अनंतः न अंतो अनंतस्तस्मिन् अनंते। ७-१ (अ इ ए। अतोत्युः। उओ। एदो०) सिद्धं। पाठसिद्धा वृत्तिः। अंते पदांते स्थितस्य व्यंजनस्य नकारस्य णकारो न भवतीत्यर्थः। नन्वत्र रेफस्याग्रे नकारो नास्ति किंतु मध्ये वकारेकारौ स्तः तत्कथं नकारस्य णकारः स्यादित्याह। सूत्रं। (अवकुप्वंत०) अवश्च कुश्च पुश्च अवकुपवः तैरंतरं अवकुप्वंतरं तस्मिन् ७-१ (अइ ए) अपि १-१ (अव्य०। एदो०) सिद्धं। अवप्रत्याहारस्य अंतरे कवर्गस्यांतरे पवर्गस्यांतरे अपिशब्दात् जिह्वामूलीयोपध्मानीयानुस्वारनुम्विसर्गाणामपि व्यवधाने अंतरेपि णत्वं वक्तव्यं। सर्वेण। सर्वाभ्याम् (अद्भि) सर्वैः (भ्यः। अ इ ए। एऐऐ। स्रो०)।

चतुर्थ्यैकवचने सर्व ए इति स्थिते (सर्वादेः स्मट्) सर्वादेरकारांतात्परस्य चतुर्थ्यैकवचनस्य स्मडागमो भवति। टकारः

---

१ ज्ञेयं-इति पाठः।

स्थाननियमार्थः(एऐ ऐ) सर्वस्मै। सर्वाभ्यां। सर्वेभ्यः। पंचम्येकवचने सर्व अत् इति स्थिते ( अतः ) सर्वादेरकारान्तात्परस्यातः स्मडागमो भवति। सर्वस्मात्। सर्वाभ्यां। सर्वेभ्यः॥ षष्ठ्येकवचने सर्व अस् इति स्थिते ( ङस्स्य ) सर्वस्य। सर्व ओस् इति स्थिते ( ओसि। ए अय् ) सर्वयोः। षष्ठीबहुवचने सर्व आम् इति स्थिते। ( सुडामः ) सर्वादेः परस्यामः सुडागमो भवति ( ए स्भि बहुत्वे ) अकारस्य एत्वं भवति ( क्लिात्षः सः कृतस्य) सस्य षत्वं। सर्वेषां। सप्तम्येकवचने सर्व ङि इति स्थिते। ( ङि स्मिन् ) सर्वादेरकारांतात्परो ङि स्मिन्भवति। सर्वस्मिन्। (ओसि) अकारस्य एत्वं (ए अय् ) सर्वयोः। सप्तमीबहुवचने सर्व सु इति स्थिते (ए स्भि बहुत्वे ) अकारस्य एत्वं। ( क्लिात्षः सः कृतस्य ) इति षत्वं। सर्वेषु। [ आभिमुख्याभिव्यक्तये हेशब्दस्य प्राक्प्रयोगः ] हे सर्व। हे सर्वौ। हे सर्वे॥

चतुर्थ्येकवचने। ४-१। सर्व अग्रे ए सूत्रं ( सर्वादेः० ) सर्वः आदिर्यस्य स सर्वादिस्तस्मात्सर्वादेः पंचम्येकवचनं। ५-१। ( ङिति। ङसिङसोरस्य ) अग्रे स्मट्। १-१। ( हसे० ) सिद्धं॥ अनेन स्मट्आगमः सस्वर एव। टित्त्वादादौ। ( एऐ ऐ ) सर्वस्मै। सर्वाभ्याम्। सर्वेभ्यः। सर्व ५-१। सर्व अस् ( ङसिरत् ) ततः सर्व अत् इति स्थिते। सूत्रं अत्। ६-१। स्वर०। ( स्रो० ) अकारांतात्सर्वादेः शब्दात्परस्य ङसिस्थाने जातस्य अत् इत्यस्य स्मडागमो भवति। इत्यनेन स्मडागमः ( सवर्णे० ) सर्वस्मात्॥ द्वित्वे बहुत्वे च देववत्। ६-१। (ङस्स्य) सर्व्वस्य। सर्व ६-२ ओस् ( ओसि। ए अय् ) स्व० ( स्रो० ) सर्वयोः। सर्व ६-३। सर्व आम् इति स्थिते सूत्रं ( सुडामः ) सुट्। १-१ ( हसे० ) आम्। ६-१। स्वर० ( स्रो०। चपा अवे० ) सर्वादेः परस्यामः सुडागमो भवति। इति सुट्। टित्त्वादादौ। उकार उच्चारणार्थः। ततः (ए स्भि०। क्लिात्षः सः०) स्वर० ( मोनुऽस्वारः ) सर्वेषां। सर्व७-१ सर्व ङि इति स्थिते। सूत्रं ( ङि स्मिन् ) ङि। १-१। सांके०। स्मिन्। १-१ ( हसे० ) सर्व्वादिरिति अनेन ङि स्मिन् आदेशः। सर्वस्मिन्निति सिद्धं। ७-२ (ओसि।

ए अय् ) स्वर० ( स्त्रो० ) सर्वयोः । ७—३ ( एस्भि० । क्लिा० ) सर्वेषु । पदद्वयप्रक्रिया देववत् । संबोधने ( समानाद्धेर्लोपोऽधातोः ) हेसर्व । हेसर्वौ । हेसर्वे । प्रथमावत् ।

**एवं विश्वादीनामेकशब्दपर्यंतानां रूपं ज्ञेयं डतरडतमौ विहाय । तौ प्रत्ययौ ततस्तदंताः शब्दाः ग्राह्याः । पूर्वः । पूर्वौ । पूर्व जस् इति स्थिते । ( पूर्वादीनां तु नवानां जस ईकारो वा वक्तव्यः ) पूर्वे पूर्वाः । परे पराः ॥ इत्यादि ( ङसिङ्योः स्मात्स्मिनौ वा वक्तव्यौ ) पूर्वस्मात् पूर्वात् । पूर्वाभ्यां । पूर्वेभ्यः ( ङस्स्य ) पूर्वस्य ( ओसि ) पूर्वयोः ( सुडामः ) पूर्वेषां ( ङि स्मिन् ) पूर्वस्मिन् पूर्वे । पूर्वयोः । पूर्वेषु । हे पूर्व । हेपूर्वौ । हे पूर्वाः हेपूर्वे । परः । परौ । ( जसी ) परे पराः । परं । परौ । परान् । परेण । पराभ्यां । परैः । परस्मै पराय । पराभ्यां । परेभ्यः । परस्मात् परात् । पराभ्यां । परेभ्यः । परस्य । परयोः । परेषां । परस्मिन् परे । परयोः । परेषु । हेपर । हेपरौ । हेपराः हेपरे ॥**

एवं सर्वशब्दरीत्या डतरडतमौ विहाय तद्वर्ज्जानां विश्वादीनां एकशब्दपर्यंतानां शब्दानां रूपमवसेयं परं डतरडतमौ विहाय वर्ज्जयित्वा । यतस्तौ प्रत्ययौ तद्धितोद्भवौ अतस्तदंताः कतरकतमादिशब्दाः ग्राह्याः । अन्यतरस्य पृथग्ग्रहणेन अन्यतमस्य प्रतिषेधः । अन्यत्सर्ववत् । विशेषमाह । तु पुनः पूर्वादीनां नवानां शब्दानां जसः ईकारो वा वक्तव्यः वा सर्ववज्जसीत्यर्थः । अन्यत्र पक्षे देववत् । पूर्वे पूर्वाः । परे पराः । इत्यादि । पुनः पूर्वादीनां नवानां ङसिश्च ङिश्च ङसिङी तयोः ङसिङ्योर्विषये स्मात्स्मिनौ आदेशौ वा वक्तव्यौ । पंचम्याः एकवचने एकत्र सर्ववत् एकत्र देववत् । पूर्वस्मात् पूर्वात् । पूर्वस्मिन् पूर्वे ॥ अन्यत्र सर्ववत् । पूर्वः । पूर्वौ । पूर्वे पूर्वाः । पूर्वं । पूर्वौ । पूर्वान् । पूर्वेण । पूर्वाभ्यां । पूर्वैः । पूर्वस्मै पूर्वाय । पूर्वाभ्यां । पूर्वेभ्यः । पूर्वस्मात् पूर्वात् । पूर्वाभ्यां । पूर्वेभ्यः । पूर्वस्य । पूर्वयोः । पूर्वेषां । पूर्वस्मिन् पूर्वे । पूर्वयोः । पूर्वेषु । हेपूर्व । हेपूर्वौ । हेपूर्वे हेपूर्वाः ॥ एवं परादयो बोध्याः ॥

**प्रथमः । प्रथमौ । प्रथम जस् इति स्थिते [ प्रथमचरमतया-**

---

१ (प्रथमचरमतयाल्पार्धकतिपयनेमानां जसीकारो वा वक्तव्यः) इत्यन्यत्रान्यथापाठोदृश्यते ।

यडल्पार्द्धकतिपयनेमानां जसी वा ] प्रथमे प्रथमाः । चरमे चरमाः । शेषं देववत् ॥ तयायटौ प्रत्ययौ ततस्तदंताः शब्दा ग्राह्याः । ( तीयस्य सर्ववद्रूपं ङित्सु वा वक्तव्यं ) द्वितीयस्मै द्वितीयाय । द्वितीयाभ्यां । द्वितीयेभ्यः । द्वितीयस्मात् द्वितीयात् । द्वितीयस्मिन् द्वितीये । द्वितीययोः । द्वितीयेषु । हे द्वितीय । हे द्वितीयौ । हे द्वितीयाः । एवं तृतीयः ॥

प्रथमचरमेति सुकरं । प्रथमचरमाल्पार्द्धकतिपयानां केवलं जसि विकल्पः । शेषं देववत् । तयट्अयट्प्रत्ययांतानां द्वयद्वितयादीनां जसि रूपद्वयं । शेषं देववत् । नेमशब्दस्य जसि विकल्पः । शेषं सर्ववत् । नेमानामिति रूपं यत् दृश्यते तत् 'द्वंद्वे सर्वादित्वं वा ' इति न्यायात् सिध्यति । जसि प्रथमे प्रथमाः । चरमे चरमाः शेषं देववत् । तयायटौ प्रत्ययौ ततस्तदंताः शब्दा ग्राह्याः। द्वितये द्वितयाः।द्वये द्वयाः । शेषं देवशब्दवत् । उभयशब्दस्य अयट्प्रत्ययांतत्वेपि सर्वादिपाठाज्जसि न विकल्पः । किंतु सर्ववत् तीयस्येति तीयप्रत्ययांतस्य द्वितीयतृतीयशब्दयुग्मस्य असर्वादित्वेपि ङित्सु वचनेषु विकल्पेन सर्ववद्रूपं । ङित्सु ङेङसिङिषु वा सर्ववत्त्वमित्यर्थः । द्वितीयस्मै द्वितीयाय । द्वितीयस्मात् द्वितीयात् । द्वितीयास्मिन् द्वितीये । शेषं देववत् । एवं तृतीयः ॥

उभशब्दो नित्यं द्विवचनांतः । उभौ । उभौ । उभाभ्यां । उभाभ्यां । उभाभ्याम् । उभयोः । उभयोः । हे उभौ ॥ उभयशब्दस्य द्विवचनाभावादेकवचनबहुवचने भवतः । उभयः । उभये । उभयं । उभयान् । उभयेन । उभयैः । उभयस्मै । उभयेभ्यः । इत्यादि ॥

उभशब्दो द्विसंख्यावाचकत्वान्नित्यं द्विवचनांतः १–२ । २–२ । ( ओऔऔ ) । ३–२ । ४–२।५–२( अद्भि ) । ६–२।७–२। ( ओसि एअय् ) स्वर० ( स्रो० ) सिद्धं । उभयशब्दस्य[1] द्विवचनाभावः । द्विवचनांतप्रयोगदर्शनाभावात् इति केचित् । "सर्वादिः सर्वनामाख्यो न चेद्गौणोऽथवाभिधा । पूर्वादिश्च व्यवस्थायां समोऽतुल्योऽन्तरोऽपुरि ॥ परिधाने बहिर्योगे स्वोऽर्थज्ञात्यन्यवाच्यपि ।" यथा उभयः । उभये । इत्यादि । इति सर्वादयः ॥

---

१ उभयशब्दस्य द्विवचनं नास्तीति कैयटः । अस्तीति हरदत्तः । इति भट्टोजिदीक्षितविरचितसिद्धान्तकौमुद्याम् ।

अकारांतः पुँल्लिंगो मासशब्दः ( मासस्याल्लोपो वा ) मासशब्दस्याकारस्य लोपो वा भवति सर्वासु विभक्तिषु परतः ॥ मासः । मासौ । मासाः । देववत् । माः । मासौ । मासः । मासं मासं । मासौ मासौ । मासः मासान् । मासा मासेन । माभ्यां मासाभ्याम् । माभिः मासैः । मासे मासाय । माभ्यां मासाभ्यां । माभ्यः मासेभ्यः । मासः मासात् । माभ्यां मासाभ्याम् । माभ्यः मासेभ्यः । मासः मासस्य । मासोः मासयोः । मासां मासानाम् । मासि मासे । मासोः मासयोः । मास्सु मासेषु ॥

मासशब्दे[1] विशेषमाह । सूत्रं । ( मास० । ) मास । ६–१ । ( ङस्स्य ) अतः अकारस्य लोपः अल्लोपः । १–१ । ( स्रो० । सवर्णे० ) वा ३–१ । ( अव्य० हबे० । उओ ) त्रिपदं । मासशब्दस्याकारस्य लोपो भवति वा विकल्पेन शसादौ स्वरे परे । सर्वविभक्तिषु परत इत्येके । एतदेव संमतं । यतः अदूषितं परमतं स्वमतमेवेति । अनेन सप्तस्वपि विभक्तिष्वकारलोपः । सौ चालोपे कृते ( हसे० स्रो० ) स्वरादौ तु स्वर० । भकारादौ ( स्रो०आदबे लोपश्) ७–३सुपि ( स्रो० । विसर्ज० । ) स्वर०एवं हसान्तसाधनम् । स्वरान्तप्रक्रिया देवशब्दवत् । माः । मासौ । मासः । मासं । मासौ । मासः । मासा । माभ्यां । माभिः । मासे । माभ्यां । माभ्यः । मासः । माभ्यां । माभ्यः । मासः । मासोः । मासाम् । मासि । मासोः । मास्सु । हेमाः । हेमासौ । हेमासः । लृतुलसानां दंता इति स्थानसवर्णत्वात् ( झबे जबाः ) इति सकारस्य दकारः स्यात् । माद्भ्यां । माद्भिः । माद्सु । इत्यपि केचित् । एवं अकारलोपपक्षे साधनं । पक्षे देवशब्दवत् । मासः । मासौ । मासाः । इत्यादि । निर्जरशब्दस्य स्वरादौ विकल्पेन जरस् आदेशः । निर्जरः । निर्जरसौ निर्जरौ । निर्जरसः निर्जराः । निर्जरसं निर्जरं इत्यादि । एवं अकारांतप्रक्रिया ॥

आकारांतः पुँल्लिंगः सोमपाशब्दः । सोमपाः सोमपौ सोमपाः । अधातोरिति विशेषणाद्धेर्लोपो नास्ति । हेसोमपाः । हेसोमपौ । हेसोमपाः ॥ सोमपां । सोमपौ । सोमपा शस् इति स्थिते । ( आतो धातोर्लोपः ) धातुसंबंधिन आकारस्य लोपो भवति शसादौ स्वरे । सोमपः । सोमपा । सोमपाभ्यां । सोमपाभिः । सो-

---

१ मासशब्दस्य इत्यन्यत्र पाठः ।

मपे । सोमपाभ्यां । सोमपाभ्यः । सोमपः । सोमपाभ्यां । सोमपाभ्यः । सोमपः । सोमपोः । सोमपां । सोमपि । सोमपोः । सोमपासु ॥ एवं कीलालपाशङ्खध्माप्रभृतयः ॥

अथ आकारांतप्रक्रियामाह । तत्र आकारांतः पुँल्लिंगः पुमेव पुमानेव लिंगं विवक्षितं यस्य स पुँल्लिंगः सोमपाशब्दः । पा पाने । पा सोमपूर्वः ( क्विप् ) इति क्विप्प्रत्ययः । क्विपः सर्वापहारी लोपः । नामत्वात्स्यादयः । क्विबंतत्वाद्धातुत्वं न जहाति शब्दत्वं च प्रतिपद्यते[1] । १–१ । ( स्रो० ) १–२ । ( ओऔऔ ) १–३ । ( सवर्णे०स्रो० ) सोमपाः । धौ धातुत्वाद्धेर्लोपो न । किंतु ( स्रो० ) हे सोमपाः । हे सोमपौ । हे सोमपाः । २–१ ( सवर्णे दीर्घः सह । मोनुस्वारः ) सोमपां । २–२ । ( ओऔ औ ) सोमपौ । द्वितीयाबहुवचने । सोमपा अस् इति स्थिते सूत्रं । आत् ६–१ । स्वर० ( स्रो० )धातु ६–१ । ( ङिति । ङसिङसोरस्य । स्रो० हवे । उओ । ) लोपः १–१ ( स्रो० । नामिनो रः ) जल० । सूत्रं सिद्धं । वृत्तिः सुकरा । अनेन शसादौ स्वरादौ अकारलोपः ( स्रो० ) सकारस्य विसर्गः । सोमपः । आमि स्वर० । ( मोनु० ) हसादावविशेषः । सोमपासु । अत्र क्विलाभावात् ( क्विलात्षः सः० ) इति न भवति । एवं कीलालपा शंखध्मा विश्वपा प्रभृतयो ज्ञेयाः । कीलालं रुधिरं पिबतीति कीलालपाः राक्षसः । आकारांतो हाहाशब्दस्तस्य च अक्विबंतत्वाद्धातुसंज्ञा न अतस्तस्य साधना भिन्नैव । हाहाः । १–१ ( स्रो० ) हाहौ १–२ । ( ओऔऔ ) हाहाः १–३ । २–१ ( अम्श० । मोनु० ) हाहां २–२ । हाहान् २–३ । आकारांताच्छसो नत्वाभावः इत्येके । हाहाः । हाहा ३–१ । ( सवर्णे० ) हाहाभ्यां ३–२ । हाहाभिः ३–३ । हाहै ४–१ ( एऐऐ ) । हाहाभ्यां । ४–२ । हाहाभ्यः ४–३ । हाहाः ५–१ ( सवर्णे० स्रो० ) । हाहाभ्यां ५–२ । हाहाभ्यः ५–३ । हाहाः ६–१ । हाहौः ६–२ । ( ओऔऔ । स्रो० ) हाहां ६–३ । पुँल्लिंगस्य दीर्घसमानत्वान्नुडागमो न किंतु ( सवर्णे० । मोनु० ) ७–१ ( अइए ) हाहे । हाहौः ७–२ । हाहासु ७–३ । संबोधनं प्रथमावत् । हे हाहाः ॥

इकारांत पुँल्लिंगो हरिशब्दः । प्रथमैकवचने हरिः । ( औ यू ) इकारांतादुकारांतात्पर औकारो यू आपद्यते ईऊ भवतः । हरी ( ए ओ जसि ) इकारांतस्य उकारांतस्य च जसि परे एकार ओकारश्च भवति । हरयः ( धौ ) इकारान्तस्योकारांतस्य च धिविषये एकार ओकारश्च भवति । ( समानाद्धेर्लोपोऽधातोः ) हे हरे । हे हरी । हे हरयः । हरिं । हरी । हरीन् ।

१ क्विन्नन्ताश्च विजन्ताश्च विडन्ताश्च तथैव ये । ते धातुत्वं न जहति नामत्वं प्राप्नुवंति च ॥

इकारांतसाधनमाह । इकारांतो हरिशब्दः दशार्थवाचकः । यतः । " अर्कमर्कटमंडूकविष्णुवासववायवः । तुरंगसिंहशीतांशुयमाश्च हरयो दश" हृञ् हरणे हृ ( इखखी ) इति इप्रत्ययः । ( गुणः । ) स्वर० हरि १-१ स् ( स्त्रो० ) । सूत्रं ( औयू ) औ १-१ सांके० । यू ईश्च ऊश्च यू २-२ । सांके० । इकारांतात्परस्य औइत्यस्य ई उकारांतात्परस्य च औ इत्यस्य ऊ इत्यर्थः । अनेन औस्थाने ई । (सवर्णे०) १-३ सूत्रं ( ए औ जसि ) ए १-१ सांके० । ओ १-१ सांके० । जस् ७-१ स्वर० सिद्धं । इकारस्य जसि परे एकारः उकारस्य च ओकारः । अनेन ए (ए अय् ) स्वर० ( स्त्रो० )संबोधने । सूत्रं ( धौ ) धि ७-१ ( ङेरौ डित् ) डित्त्वाट्टिलोपः । एकपदं। धौ धिविषये इकारस्य एकारः उकारस्यौकारः ( समानाद्धेर्लोपोऽधातोः ) इति धेर्लोपे कृते धौ इति एकारः। " सर्पे नष्टे सर्पघृष्टिर्न याति " इति न्यायाद्धिलोपेऽपि धिविषयो न याति । हे हरे । हे हरी । ( औ यू ) हे हरयः (एओ जसि । एअय् ) स्वर० ( स्त्रो० )२-१ ( अम्शसो० ) अकारस्य लोपः । ( मोनु० ) । २-२ ( औयू । सवर्णे० । ) २-३ ( अम्शसो० । सो नः पुंसः । शसि ) इति दीर्घः । हरीन् ।

**( टा नाऽस्त्रियाम् ) इकारांतादुकारांताच्च परष्टा ना भवति अस्त्रियां । हरिणा हरिभ्यां हरिभिः । हरि ङे इति स्थिते ( ङिति ) इकारोकारांतस्य च ङिति परे एकार ओकारश्च भवति । हरये हरिभ्यां हरिभ्यः । हरि ङसि इति स्थिते ( ङस्य ) एदोद्भ्यां परस्य ङसिङसोरकारस्य लोपो भवति । हरेः हरिभ्यां हरिभ्यः । हरेः हर्योः हरीणां । हरि ङि इति स्थिते । ( ङेरौ डित् ) इदुद्भ्यामुत्तरस्य ङेरौ भवति स च डित् ( डिति टेः ) डिति परे टेर्लोपो भवति । हरौ हर्योः हरिषु । एवमग्निगिरिरविकविप्रभृतयः पुँल्लिगाः एतैरेव सूत्रैः सिध्यन्ति ।**

३-१ । सूत्रं ( टा नास्त्रियां ) टा १-१ । सांके० ना १-१। सांके० । नस्त्री अस्त्री तस्यां । ७-१ । ( स्त्रियां योः ) इति ङेः आम् ( स्त्रीभ्रुवोः ) स्वर० ( सवर्णे० । मोनु० । ) सिद्धं त्रिपदं । इकारांतात् उकारांताच्च शब्दात्परः यष्टा इति विभक्तिवचन-

---

१ ङसिङसोरस्य-इति क्वाचित्कः पाठो दृश्यते । परंतु स पाठ एतट्टीकाकारेण चन्द्रकीर्तिना केचिन्मताभिप्रायेणाभिमतः । सर्वत्र सूत्रस्य पंचम्यन्तषष्ठ्यन्तेकारान्तोकारान्तशब्दानां च साधनार्थं ' ङस्य ' इति पाठस्यैव उपन्यासः कृतो दृश्यते । क्वाचित्काचिच्च ' ङसिङसोरस्य ' इति सूत्रोपन्यासो दृश्यते। स केचिन्मताभिप्रायेणेति बोद्धव्यं। प्रसादटीकाकारभट्टवासुदेवस्यापि ' ङस्य ' इत्येव सूत्रपाठोऽभिप्रेतः इति ज्ञेयम् ।

रूपस्तस्य स्थाने ना इति भवति पुँल्लिंगे नपुंसकलिंगे च । स्त्रीलिंगे तु न भवति । अनेन टाइत्यस्य ना ( ष्रुन्नों० ) हसादावविशेषः ४–१ सूत्रं ( ङिति) ङ् इत् अनुबन्धो यस्य स ङित् तस्मिन् ङिति । ७–१ । स्वर० । एकपदं । इकारान्तस्य ङेङसिङस्ङिष्वेकारः उकारस्य ओकारः । अनेन ४–१ रिइत्यस्य रे । (एअय् )स्वर०हरये५–१। ६–१ । ( ति ) इत्यनेन एकारे कृते । सूत्रं । ङकारेण उपलक्षितः अः ङः तस्य ङ ६–१ । ( ङस्य केचित्तु । ( ङसिङसोरस्य ) एवं सूत्रं पठंति । एकारौकाराभ्यां परस्य पंचमीषष्ठ्येकवचनसंबंधिनो अकारस्य लोपो भवति । अनेन अकारलोपः ( स्रो० ) ६–२ ( इयं स्व० । राद्यपो० ) जल० । स्वर० ६–३ ( नुडामः । नामि । ष्रुन्नों० ) स्वर० ( मोनु० ) ७–१ । सूत्रं ( ङेरौ डित् ) ङि ६–१ ( ङिति । ङस्य । स्रो० ) औ १–१ । सांके० । ( नामिनो रः ) डित् १–१ ( हसे० ) सिद्धं त्रिपदं । इकारोकाराभ्यां परस्य सप्तम्येकवचनस्य ङि इत्यस्य औ भवति स च डित्संज्ञकः । डित्प्रयोजनमाह । सूत्रं । ( डिति टेः ) । ड इत् यस्य स डित् । तस्मिन् ७–१ । स्वर० टि ६–१ ( ङिति ङस्य । स्रो० । ) वृत्तिः कंव्या । डकारः इत् याति यस्य तस्मिन् आदेशे तस्यां विभक्तौ प्रत्यये च परे टेर्लोपो भवति । इति डित्वाट्टिलोपः । स्वर० केचित् ( ङिति ) इत्येकारे कृते यदादेशस्तद्वद्भवतीति न्यायात् ङेरौकारमिच्छंति। हरौ । इति सिद्धं । द्विवचने पूर्ववत् । ७–३ । ( क्लिा० ) एवं हरिशब्दवत् अग्न्यादयोपि शब्दा ज्ञेयाः । अग्निरविकविकपिगिरिमुनिसूरिकलिआधिनिधिसंधिविधिग्रंथिअंजलिध्वनिदुंदुभिप्रभृतयः ।

**उकारांताश्च विष्णुवायुभानुप्रभृतयः पुँल्लिंगाः एतैरेव सूत्रैः सिद्ध्यंति । उकारांतः पुँल्लिंगो भानुशब्दः । तस्य हरिवत्प्रक्रिया । भानुः भानू भानवः । भानुं भानू भानून् । भानुना भानुभ्यां भानुभिः । भानवे भानुभ्यां भानुभ्यः । भानोः भानुभ्यां भानुभ्यः । भानोः भान्वोः भानूनां । भानौ भान्वोः भानुषु । हे भानो हे भानू हे भानवः ।**

उकारान्ताश्च वेणुविष्णुवायुभान्वादयोप्येतै रेव सूत्रैः सिध्यंति । भानुशब्दस्य ( औयू ) इत्यनेन औ इत्यस्य ऊ ( सवर्णे० ) भानू । भानु जस् (एओ जसि । ओ अव् ) भानवः धौ च (समानाद्धेर्लोपो०) इति उकारस्य ओकारः ३–१ (टानाऽस्त्रियां) ङिस्तु ४–१ ( ङिति ) इति उकारस्यौकारः । ( ओअव् ) । ५–१ । ६–१ ( ङिति ) इत्येकारे कृते ( ङस्य ) इत्यकारलोपः ङौ ७–१ ( ङेरौडित् ) ओसि ( उ वं० ) सुपि ( क्लिा० ) उकारांतः पुँल्लिंगः तितउशब्दः चालिनीवाचकः । तितउः तितऊ ति-

लक्षितो ङः अः तस्य ६–१ सांके० उः १–१ (स्त्रो०) त्रिपदं सूत्रं सिद्धं । ऋकारां० । वृत्तिः कंठ्या । अनेनोभयत्राप्यकारस्योकारः स च उकारो ङित्संज्ञकः कल्प्यः ङित्वाट्टिलोपः (ङिति टेः) स्व० (स्त्रो०) ६–२ (इयं स्व० । स्त्रो०) ६–३नुडागमः (नामि) स्व० (मोनु०) ७–१ (ङेरौ ङित्) इत्यौकारे कृते ङित्वाट्टिलोपे च कृते यदादेशस्तद्वद्भवतीति न्यायात् एकदेशविकृतमनन्यवद्भवतीति न्यायाच्च॥ (सखिपत्योरीङ्) इति ईगागमः (इयं०) शेषं हरिवत् । एवं सखिशब्दसाधनम् ॥

**पतिशब्दस्य प्रथमाद्वितीययोः हरिशब्दवत्प्रक्रिया । तृतीयादौ तु सखिशब्दवत्प्रक्रिया । पतिः (औ यू) पती । (ए ओ जसि) पतयः । पतिं । पती । पतीन् (सो नः पुंसः) (सखिपत्योरीङ्) पत्या । पतिभ्यां । पतिभिः । पत्ये । पतिभ्यां । पतिभ्यः (ऋङ्ङे । ऋतो ङ उः) स च ङित् । पत्युः । पतिभ्यां । पतिभ्यः । [पतिरसमास एव सखिशब्दवद्वक्तव्यः ।] ततः समासांतस्य नादयो भवंति । प्रजापतिना । प्रजापतये । इत्यादि ॥**

पतिशब्दस्य साधनमाह । पा रक्षणे । (पातेः कित्) इति डतिः (आतोनपि) पातीति पतिः । पतिशब्दस्य प्रथमाद्वितीययोः प्रक्रियासाधना हरिशब्दवत् । तृतीयादौ तु सामान्येन सखिशब्दवत् । पत्या पत्ये पत्युः पत्यौ । तत्रापि विशेषमाह । असमासः समासरहित एव पतिशब्दः सखिशब्दवत् साध्यः टादौ स्वरे । समासांतस्य च पतिशब्दस्य नादयो भवंति (टा नास्त्रियां । ङिति । ङस्य । ङेरौ ङित् ।) इत्यादिसूत्राणि भवंति । यथा प्रजानां पतिः प्रजापतिः इति तत्पुरुषसमासे कृते द्वितीयां यावदविशेषः । तृतीयादौ तु (टा नास्त्रियां ।) इत्यादिसूत्रसमुच्चयेन हरिशब्दवत्साधनेत्यर्थः। प्रजापतिना । प्रजापतिभ्यां । प्रजापतिभिः । प्रजापतये । प्रजापतेः । प्रजापतेः । प्रजापतौ इति । धौ हे प्रजापते (समानाद्धेर्लोपोऽधातोः) हे प्रजापती । (औ यू) हे प्रजापतयः (ए ओ जसि) सिद्धं ।

**द्विशब्दो नित्यं द्विवचनांतः । द्वि औ इति स्थिते (त्यदादेष्टेरः स्यादौ) त्यदादेष्टेरकारो भवति स्यादौ परे । द्वौ । द्वौ । द्वाभ्यां । द्वाभ्यां । द्वाभ्यां। द्वयोः।द्वयोः ।त्यदादीनां घेरभावः ।**

द्विशब्दो द्विसंख्यावाचकत्वात् नित्यं द्विवचनांत एव । द्विवचनं अंते यस्य स द्वि-

१ स्यादिति पाठोऽन्यत्र ।

वचनांतः द्वि० । १–२ । २–२ । ३–२ । ४–२ । ५–२ । ६–२ । ७–२ । सूत्रं ( त्यदादेष्टेरः ) त्यद् आदिर्यस्य स त्यदादिस्तस्य त्यदादेः । ६–१ । ( ङिति । ङस्य । स्तो० ) टि ६–१ प्राग्वत् ( विसर्जनी० ष्टुभिः ष्टुः । ) स्वर० अ १–१ ( स्तो० नामिनो०) स्व० स्यादि । ७–१ ( ङेरौ ङित् ) ङित्त्वाट्टिलोपः (स्वर०) चतुःपदं । त्यद् तद् यद् एतद् अदस् इदम् द्वि किम् युष्मद् अस्मद् । एते त्यदादयः । त्यदादेः शब्दस्य टेः ( अंतस्वरादिष्टिः ) इति संज्ञाप्रक्रियोक्तलक्षणायाः टेः स्यादौ विभक्तौ परतो अकारो भवति । अनेन द्वि इत्यस्य द्व सर्वत्र रूपद्वये १–१ । २–२ ( ओ औ औ ) ततो रूपत्रये ३–२ । ४–२ । ५–२ । अद्वि ६–२ । ७–२ । (ओसि । ए अय्) स्वर० ( स्तो० ) त्यदादीनां संबोधनाभावः । सिद्धोऽयं द्विशब्दः ।

**त्रिशब्दो नित्यं बहुवचनांतः । त्रि जस् इति स्थिते ( ए ओ जसि ) इत्येकारे कृते अयादेशः । त्रयः ( सो नः पुंसः ) त्रीन् त्रिभिः । त्रिभ्यः । त्रिभ्यः । त्रि आम् इति स्थिते ( त्रेरयङ् ) त्रिशब्दस्य अयङ् आदेशो भवति नामि परे । [ ङिदंतस्य वक्तव्यः ] त्रयाणां ( क्लिात्षः सः कृतस्य ) इति षत्वं । त्रिषु ।**

इकारांतः त्रिशब्दस्त्रिसंख्यावाचकत्वान्नित्यं बहुवचनांतः । बहुवचनमेव अंते यस्य सः १–३ । त्रिअस् इति स्थिते ( ए ओ जसि । ए अय् ) स्वर० ( स्तो० ) त्रयः इति सिद्धं । शसि । ( अम्शसो० । सो नः पुंसः । शसि ) त्रीन् । त्रिभिः । त्रिभ्यः । आमि विशेषः । पूर्वं ( नुडामः ) ततः । सूत्रं । त्रि ६–१ ( ङिति । ङस्य । स्तो० ) अयङ् १–१ ( हसेपः० । नामिनो रः ) सिद्धं । बहुवचनान्तस्यैकवचनस्थापनार्थम् त्रिशब्दस्येति । त्रिशब्दस्य अयङ् इत्यादेशो भवति नुट्सहिते आमि परे । ङित् ङकारेत् आदेशः अंतस्य भवतीति वचनात् । इकारस्येत्यर्थः । नन्वत्र षष्ठ्या निर्दिष्टस्येत्यनेनांतस्यादेशप्राप्तौ पुनर्ङिदंतस्येति किमर्थमुक्तं तत्राह । (गुरुः शिञ्च सर्वस्य) इत्यनेन षष्ठीनिर्दिष्टस्येत्यस्य बाधः । अयङ् इति बह्वक्षरत्वेन गुरुरादेशस्तेन सर्वस्यैव भवति तन्निवारणार्थं ङिदंतस्येति । ङित् ङकारेत् यः आदेशः स गुरुरपि अंतस्यैव भवति इकारस्य अय इत्यादेशः । ( नामि ) इति दीर्घः ( ऋरुन्नोंणो०) स्वर० (मोनु०) त्रिशब्दस्य बहुवचनांतत्वेपि त्रेरित्येकवचनं शब्दनिर्देशात् । अथवा त्रेरित्येकवचननिर्देशात् । असमासांतत्वे एव अयङ् आदेशः । समासांतत्वे तु न । यथा प्रियास्त्रयो येषां ते प्रियत्रयः । तेषां प्रियत्रीणां, एवं अतिक्रांतास्त्रीनिति अतिक्रान्तास्त्रयो यैस्ते इति वा अतित्रयस्तेषां अतित्रीणां इत्यादौ न अयङ् आदेशः ७–३ ( क्लिात्षः सः० ) हे त्रयः ।

---

१ अपवादः–इति पाठः ।

कतिशब्दो नित्यं बहुवचनांतः । कति जस् इति स्थिते [ कतिशब्दाज्जश्शसोर्लुग्वक्तव्यः ] कति । कति । कतिभिः । कतिभ्यः । कतिभ्यः । कतीनां ॥ कतिषु । त्रिषु सरूपः ॥

का संख्या येषां ते कति । किम्शब्दात् डतिप्रत्ययः ( शेषा निपात्याः कत्यादयः ) इति सिद्धस्य कतिशब्दस्य बहुवचनांतस्यापि जश्शसोर्विशेषमाह । ( कतिशब्दात्परयोर्जश्शसोर्लुग्वक्तव्यः ) ( डतिप्रत्ययांतादिति वा ) अनेन जश्शसोर्लोपः कर्त्तव्यः ( लुकि न तन्निमित्तं ) इति लुकि कृते सति यस्य लुक् क्रियते स एव निमित्तं कारणं यस्य ईदृशं यत्कार्यं तन्न भवति । तेन ( ए ओ जसि । शसि ) इति दीर्घत्वं च न भवति शेषं सुगमं । कतिशब्दस्य संबोधनाभावः । एवं कतिसाहचर्यात् यतिततिशब्दाभ्यां परयोजश्शसोर्लुग्वक्तव्यः 'यति ते नाग शीर्षाणि तति ते नाग वेदनाः ।' इत्युदाहरणं । कतिशब्दस्य त्रिष्वपि लिंगेषु सदृशरूपाणि ॥ इकारांता उक्ताः ॥

ईकारांतः पुँल्लिंगः सुश्रीशब्दः । सुश्रीः । सुश्री औ इति स्थिते ( य्वोर्धातोरियुवौ स्वरे ) धातोरीकारोकारयोरियुवौ भवतः स्वरे परे । सुश्रियौ ।सुश्रियः। हे सुश्रीः । हे सुश्रियौ। हे सुश्रियः। सुश्रियं । सुश्रियौ । सुश्रियः। सुश्रिया । सुश्रीभ्यां । सुश्रीभिः। सुश्रिये । सुश्रीभ्यां । सुश्रीभ्यः । सुश्रियः । सुश्रीभ्यां। सुश्रीभ्यः । सुश्रियः । सुश्रियोः । सुश्रियां । सुश्रियि । सुश्रियोः । सुश्रीषु ॥

ईकारांतानाह । ईकारांतः पुँल्लिंगः सुश्रीशब्दः । श्रिञ् सेवायां । सुपूर्वः । क्विप्प्रत्ययः ( प्रच्छादेर्दीर्घता ) इति दीर्घः । क्विपः सर्वापहारी लोपः । सुष्ठु श्रयंत्येनमिति सुश्रीः । क्विबंतत्वाद्धातुत्वं न जहति शब्दत्वं च प्रतिपद्यंते इति स्यादयः । १–१ । ( स्रो० । ) द्विवचने । सूत्रं । (य्वोर्धातोः०) इति । ई च ऊ च य्वौ तयोः । ६–२ । ( इ यं० । उ वं० ) स्वर० । धातु ६–१ ( ङिति । ङस्य । स्रो० ) इयुव् १–२ स्वर० ( नामिनो रः ) स्वर०७–१ ( अ इ ए ) चतुःपदं । धातोरीकारस्य स्वरे परे इय् ऊकारस्य स्वरे परे उव् ( इ यं स्वरे ) इति सूत्रात् स्वरे इत्यनुवृत्तौ सत्यां पुनः स्वरग्रहणं स्वरकार्यांतरव्यावृत्त्यर्थम् । (अम्शसोरस्य । नुडामः) इति निषेधार्थं विभक्तिवर्जितस्वरानिषेधार्थं च । ततोत्र विभक्तिस्वर एव ग्राह्यः तेन श्रीअर्थं श्र्यर्थमित्यादौ न इय् किंतु ( इ यं स्वरे ) इति यत्वं अनेन स्वरादौ इय् । स्वर० । हसादावविशेषः

सुपि ( क्लिातषः० । ) संबोधने धातुत्वाद्धिलोपो न किंतु । ( स्रो० । ) हे सुश्रीः । हे सुश्रियौ । हे सुश्रियः ।

तथैव सुधीशब्दः । सुष्ठु ध्यायतीति । सुधीः । ( य्वोर्धातोरियुवौ स्वरे ) सुधियौ । सुधियः । हे सुधीः । सुधियं । सुधियौ । सुधियः । सुधिया । सुधीभ्यां । सुधीभिः । सुधिये । सुधीभ्यां । सुधीभ्यः । सुधियः । सुधियोः । सुधियां । सुधियि । सुधियोः । सुधीषु । एवमुकारांतः पुँल्लिंगः स्वयंभूशब्दः । स्वयं भवतीति स्वयंभूः । स्वयंभुवौ । स्वयंभुवः । हे स्वयंभूः । स्वयंभुवं । स्वयंभुवौ । स्वयंभुवः । स्वयंभुवा । स्वयंभूभ्यां । स्वयंभूभिः । स्वयंभुवे । स्वयंभूभ्यां । स्वयंभूभ्यः । स्वयंभुवः । स्वयंभूभ्यां । स्वयंभूभ्यः । स्वयंभुवः । स्वयंभुवोः । स्वयंभुवां । स्वयंभुवि । स्वयंभुवोः । स्वयंभूषु ॥

एवं सुधीशब्दः । ऊकारांतः स्वयंभूशब्दोऽप्येवमेव । एवमूकारांतो लूशब्दः । लूञ् छेदने इत्यस्माद्धातोः । लूः लुवौ लुवः इत्यादि ॥

सेनानीशब्दस्याविशेषो हसादौ स्वरादौ तु विशेषः । सेनां नयति इति सेनानीः । सेनानी औ इति स्थिते ( य्वौ वा ) धातोरवयवसंयोगः पूर्वो यस्मादीकारादूकारान्नास्ति तदंतस्यानेकस्वरस्य कारकाव्ययपूर्वस्य एकस्वरस्य च धातोरीकारस्य ऊकारस्य च यकारवकारौ भवतः स्वरे परे । वर्षाभूपुनर्भूव्यतिरिक्तभूशब्दसुधीशब्दौ वर्ज्जयित्वा वाग्रहणादियं विवक्षा । सेनान्यौ । सेनान्यः । हे सेनानीः । हे सेनान्यौ । हे सेनान्यः । सेनान्यं । सेनान्यौ । सेनान्यः । इत्यादि (सेनान्यादीनां वामो नुट् वक्तव्यः ) सेनानीनां सेनान्यां । सेनानी ङि इति स्थिते । ( आम्ङेः । ) आबंतादीबंतान्नीशब्दाच्चोत्तरस्य ङेरामादेशो भवति । सेनान्यां । सेनान्योः । सेनानीषु ॥ एवं ग्रामणीप्रभृतयः ॥ ऊकारांताश्च यवलूप्रभृतयः ॥

णीञ् प्रापणे ( आदेः ष्णः स्नः ) नी सेनापूर्वः । सेनां नयति इति सेनानीः । क्विप्प्रत्ययांतः । सेनानीशब्दस्येकारांतधातोरपि हसादौ अविशेषः स्वरादौ तु विशेषस्तमेव सूत्रद्वारेण व्याख्याति ( य्वोर्धातोरियुवौ स्वरे ) अनेन ( इ यं स्वरे । उ०वं ) इत्येतयोर्बाधो जातः । सेनानीशब्दस्येकारांतत्वे ( य्वोर्धातोः० ) इत्यस्य बाधनार्थं (य्वौय्वा ) इति सूत्रं पठ्यते । यू च वू च य्वौ १-२ वा ३-१ ( अव्य० ) यस्मात् ईकारात ऊकाराच्च पूर्वः आदौ वर्त्तमानो धातोः अवयवसंयोगः सुश्रीयवक्रीवदक्षरादिसंयोगो नास्ति तदंतस्य स एव धात्ववयवसंयोगपूर्वकस्वराहितः ईकारः ऊकारो वा अंते यस्य स तदंतस्तस्य पुनः अनेकस्वरस्य द्वित्रिस्वरसहितस्य शब्दस्य संबंधिनः ईकारस्य यकारः ऊकारस्य च वकारः । ननु णीञ् प्रापणे अयं धातुः एकस्वरः कथमनेकस्वरत्वं उच्यते । कारकपूर्वस्यापि क्विबंतग्रहणेन ग्रहणादनेकस्वरत्वं । अत्र वाशब्दो व्यवस्थावाचको न तु विकल्पार्थस्तेन वर्षाभूपुनर्भूदृन्भूदृग्भूकाराभूकारभूकरभूएभ्यो अतिरिक्तो अन्यो यो भूशब्दः स्वयंभूकमलभूनाभिभूअंगभूशरभूआत्मभूमनोभूप्रतिभूप्रभृतिकस्तस्य संभवे सत्यपि ( य्वौ वा ) इति न भवति । किंतु ( य्वोर्धातोरियुवौ स्वरे ) इति भवति यथा सुधीशब्दस्यापि संभवे सत्यपि ( य्वौ वा ) इति न भवति । किंतु ( य्वोर्धातोरियुवौ स्वरे ) इत्येव भवति। अत एतौ वर्जयित्वा अपर ईकारऊकारयोः पूर्वोक्तलक्षणयोर्यकारवकारौ भवतः । वाग्रहणादियं विवक्षा ज्ञेया । कुतः । निपातानामनेकार्थत्वात् । धातोः संयोगपूर्वकत्वे सुश्रियौ यवक्रियौ कटप्रुवौ इत्यादौ न यकारवकारौ । किंतु इयुवावेव । एकस्वरे तु नीः । नियौ । धीः । धियौ । लूः । लुवौ । भूः । भूवौ । भुवः । इत्यादौ न यकारवकारौ । बहुव्रीहिसमासे अनेकस्वरस्यापि इयुवौ भवतः । यथा । सुधीः । सुधियौ । सुधियः । कुधीः । कुधियौ । परमधियौ । इत्यादि । धात्ववयवसंयोगपूर्वकत्वे एव यकारवकारौ न भवतः । तेन उन्नीः । उन्न्यौ । उन्न्यः । इत्यादौ स्वाभाविकधात्ववयवसंयोगपूर्वकत्वाभावात् यत्वं भवति । वर्षाभूपुनर्भूदृन्भूदृग्भूकारभूकाराभूकरभूइत्यत्र भूशब्दस्य च वत्वं अन्यत्र उवेव । वाशब्दस्य व्यवस्थावाचकत्वात् इयं विवक्षा लभ्यते । अनेन स्वरादौ सर्वत्र यकारः । स्वर० । आमि विशेषः । सेनान्यादीनां शब्दानां आमः षष्ठीबहुवचनस्य वा नुडागमो वक्तव्यः । अनेन एकत्र ( नुडामः ) स्वर० ( मोनु० ) अन्यत्र ( य्वौ वा ) इति यकारः । स्वर० ७-१ सूत्रं । आम् १-१ ( हसे० ) ङि ६-१ ( ङिति । ङस्य । स्रो० ) केचित् आम्ङेर्नियश्चेत्थं सूत्रं पठंति तन्मतं साधीयः । नीशब्दादित्यनुवृत्तिर्न दृश्यते आवंतात्स्त्रीलिंगे आप्प्रत्ययांतान्नीशब्दाच्चोत्तरस्य ङेः सतम्येकवचनस्याम् भवति । अनेनाम्ि कृते ( य्वौ वा ) इति यकारः ( स्वर० मोनु० ) धातुत्वाड्ढेर्लोपो न । शेषं सुकरम् ।

एवं ग्रामणीअग्रणीप्रधीशब्दप्रभृतयोऽपीकारांता धातुशब्दाः ज्ञेयाः ऊकारांताश्च यव-

१ सूत्रेणेत्येकत्र । सूत्रद्वारेत्यन्यत्र ।

लूखलपूदृन्भूदृग्भूकारभूकाराभूकरभूवर्षाभूपुनर्भूप्रभृतयोऽप्येवं । परं सप्तम्येकवचने नीशब्दाभावात् ङेराम् न भवति तेन यवल्वि पुनर्भ्वि वर्षाभ्वि इति रूपं । वर्षासु भवतीति वर्षाभूः । मण्डूकः । यवान् लुनातीति यवलूः । खलं पुनातीति खलपूः । पुनर्भवतीति पुनर्भूः ब्रह्मा । दृक् स्त्री । दृशा भवतीति दृग्भूः । सर्प्पः । यद्वा दृशः भवतीति दृग्भूः मयूरः । दृन् हिंसन् भवतीति दृन्भूः । कीटः । कारायां भवतीति काराभूः । कारे कारेण वा भवतीति कारभूः । राजदेयो भागः । एते क्विप्प्रत्ययांताः । इकारांतो वातप्रमीशब्दः । मृगविशेषः । वातप्रमी १-१( स्रो० ) वातप्रमीः । वातप्रम्यौ । धातुत्वाभावात् । ( य्वौ वा ) इति न किंतु ( इ यं स्वरे ) वातप्रम्यः । वातप्रमीं । वातप्रम्यौ । वातप्रमीन् । वातप्रम्या । वातप्रमीभ्यां । वातप्रमीभिः । वातप्रम्ये । वातप्रम्यः । वातप्रम्यः । वातप्रम्याम् । ७-१ ( सवर्णे० ) वातप्रमी । वातप्रम्ये । वातप्रम्योः । वातप्रमीषु । हे वातप्रमीः । "अमि वातप्रमीं रूपं शसि वातप्रमीनिति । ङौ तु वातप्रमी रूपं एवं देवयजीरपि ॥ १ ॥" एवं अतिलक्ष्मीः । पंथः पपीः[2] । एवं ऊकारांतो हूहूशब्दः। हूहूः । हूह्वौ । हूह्वः । स्वरे परे सर्वत्र ( उ वं ) अमि । हूहूं । हूह्वौ । शसि । हूहून् । आमि । हूह्वां । ङौ । हूह्वि ॥

**ऋकारांतः पुँल्लिंगः पितृशब्दः ( सेरा ) ऋकारांतात्परस्य सेरा भवति स च डित् । डित्त्वात् टिलोपः । पिता ( पंचसु[3] ) ऋकारो अर् भवति पंचसु स्यादिषु परेषु । पितरौ । पितरः । ( धेरर् ) ऋकारांतात्परस्य धेरर् भवति । स च डित् । डित्त्वाट्टिलोपः । हे पितः । हे पितरौ । हे पितरः । पितरं । पितरौ । पितॄन् । पित्रा । पितृभ्यां । पितृभिः । पित्रे । पितृभ्यां । पितृभ्यः । ( ऋतो ङ उः ) पितुः । पितृभ्यां । पितृभ्यः । पितुः । पित्रोः । पितॄणां ( ङौ ) ऋकारस्य अर् भवति ङौ परे । पितरि । पित्रोः । पितृषु । एवं जामातृभ्रात्रादयः ।**

ऋकारांतानाह । ऋकारांतः पितृशब्दः । पा रक्षणे उणादिकः प्रत्ययः अकारस्य चेकारः । पाति रक्षतीति पिता । पितृशब्दो निपातसिद्धो न तृप्रत्ययांतः । यतः । "पिता मातानन्नांदानासव्येष्टृभ्रातृयातरः । जामाता दुहिता देवृनप्तृनेता इमे दश ॥ १ ॥" पि-

---

१ हता-इति पाठः एकत्र । धृती-इति चान्यत्र । दृति-इति परत्र । अत्र आशयो ज्ञायते । २ पयः पपीः-इति पाठः । ३ अस्मिन्सूत्रे ( ऋ अर् ) इति पूर्वसूत्रात् ( अर् ) इत्यनुवर्तते-सूत्रं चेदमेकपदमेव ।

तृ। १–१। सूत्रं ( सेरा ) सेः ६–१ ( ङिति। ङस्य। स्रो० ) आ। १–१। सांके० (नामिनो रः ) ऋकारान्ता इति। ऋकारान्तात्परस्य सेः आ इत्यादेशः स च आ डित्संज्ञकः। डित्त्वाट्टिलोपः। स्वर० पिता। सूत्रं। पंचन्। ७–३ ( नाम्नो नो० ) एकपदं। स्यादिषु पंचसु वचनेषु परेषु ऋकारोर् भवति। स्थानशून्यार्थं सेरपि ग्रहणं। सिविषये तु ( सेरा ) इत्याकारप्राप्तौ ( पंचसु ) इत्यरप्राप्तौ च विशेषत्वान्नित्यत्वाच्च (सेरा) एव भवति। केचित्तु प्रथमं(पंचसु)इत्यर् विधाय ततो यदादेशस्तद्वद्भवति इति न्यायात (सेरा ) इति सेः आ कुर्वंति ततष्टिलोपः। स्वर०। पिता। पितृ। १–२। १–३ अनेन अर्। स्वर०। ( स्रो० ) शेषं सुकरम्। धौ कृत्यमाह। सूत्रं। ( धेरर् ) धि। ६–१ ( ङिति। ङस्य। स्रो० ) अर्। १–१ ( हसेपः० ) मध्ये ( नामिनो रः ) ऋकारां० इति धेः अर् आदेशो भवति स च डित् डित्त्वाट्टिलोपः। स्वर० शेषं सुगमं। हे पितः। २–३ ( अम्श० सो नः पुंसः। शसि ) तृतीयायां चतुर्थ्यां चैकत्वे ( ऋ रं। हसेर्हसः ) स्वर० हसादावविशेषः। ५–१। ६–१ ( ऋतो ङ उः। ङिति टेः ) इति टेर्लोपः। स्व० ( स्रो० ) ६–२। ७–२ ( ऋ रं ) स्वर० ६–३ ( नुडामः। नामि। ष्ठन्नों० ) ७–१। सूत्रं ङि। ७–१। ( ङेरौ० ) टिलोपः। स्वर० एकपदं। तेनं अर्। ( स्वर० ) ७–३ ( क्लिा० ) एवं जामातृभ्रात्रादयः शब्दाः साध्याः। जामाता। जामातरौ। जामातरः। भ्राता। भ्रातरौ। भ्रातरः। देवा। देवरौ। देवरः। इत्यादि। सव्येष्टा। सव्येष्टरौ। सव्येष्टरः। " सव्येष्टा सूतसारथी। "

**एवं नृशब्दः। ( सेरा ) ना। नरौ। नरः। हे नः। हे नरौ। हे नरः। नरं। नरौ। नॄन्। न्रा। नृभ्यां। नृभिः। न्रे। नृभ्यां। नृभ्यः। नुः। नृभ्यां। नृभ्यः। नुः। न्रोः। (नुर्वा नामि दीर्घः) नृशब्दस्य नामि वा दीर्घो भवति। नृणां नॄणां। नरि। न्रोः। नृषु। कर्तृशब्दस्य पंचसु विशेषः ( स्तुरार् ) सकारतृप्रत्ययसंबंधिन ऋकारस्यार् भवति पंचसु परेषु। कर्तार् सि इति स्थिते ( यदादेशस्तद्वद्भवति ) (सेरा) डित्त्वाट्टिल्लोपः। कर्ता। कर्तारौ। कर्त्तारः। हे कर्तः। कर्त्तारं। कर्त्तारौ। कर्तॄन्। पूर्ववत्प्रक्रिया। एवं नप्तृहोतृप्रशास्तृपोतृउद्गातृप्रभृतयः।**

नृशब्दोपि पितृशब्दवत्। ना। नरौ। नरः। हे नः। हे नरौ। हे नरः। नरं। नरौ। नॄन्। न्रा। नृभ्यां। नृभिः। न्रे। नृभ्यां। नृभ्यः। नुः। नृभ्यां। नृभ्यः। नुः। न्रोः।

[1] अनेन–इ०पा०।

आमि विशेषमाह सूत्रं । ( नुर्वा० ) इति । नृ ६–१ ( ऋतो ङ उः ) वा ३–१ ( अव्यया० ) मध्ये ( नामिनो रः ) नाम् ७–१ स्वर०दीर्घ १–१ ( स्रो० ) सिद्धम् । नृशब्दस्य नामि परे दीर्घो वा भवति । नृणां नॄणां । नरि । न्रोः । नृषु । माता ननांदा याता दुहिता स्त्रीलिंगे ज्ञेयाः इति सिद्धं । डुकृञ् करणे ( तृवणौ ) इति तृप्रत्यये गुणः । ( राध० ) स्वर० । कर्तृ । करोतीति कर्ता । कर्तृशब्दस्य पंचसु विशेषस्तमेवाह । सूत्रं ( स्तुरार् ) स च तृश्च स्तृ तस्य स्तुः । ६–१ ( ऋतो ङ उः ) टिलोपः ( स्रो० ) आर् । १–१ ( हसे० । नामिनो रः ) सिद्धं ॥ सकारसंबंधिन सिसहितस्य ऋकारस्य सकारोपलक्षितस्य ऋकारस्येत्यर्थः । तृप्रत्ययसंबंधिनः इति ( तृवणौ ) इत्यादि कृत्सूत्रोत्पन्नतृप्रत्ययस्य च ऋकारस्य स्यादिषु पंचसु परेषु आर् भवति सकारसंबंधी ऋकारः । स्वसृशब्दोऽप्येवं । तेन प्रियतिसृशब्दादा आर् न स्यात् । प्रियतिसा । प्रियतिस्रौ । प्रियतिस्रः इत्यादि । अनेन द्वितीयाद्विवचनांतं यावत आर् । तत्र प्रथमेकवचने कर्तार् स् इति स्थिते । ऋकारासंभवे कथं सेराकारस्तत्राह ( यदा० ) यो यस्यादेशः स तद्वदेव भवतीत्यर्थः । ऋकारस्य आर् आदेशः स ऋकारवत् ज्ञेयः । ततः ( सेरा ) टेलोपः सर्वत्र । ( स्वर० ) संबोधने ( स्तुरार् ) ततः ( धेरर् ) टिलोपः स्वर० ( स्रो० ) हे कर्त्तः । शेषं सुकरं । शसि ( अम्शसोरस्य । सो नः पुंसः । शसि ) तृतीयादौ पितृशब्दवत् । यथा । ३–१ ( ऋ रं ) स्वर० । कर्त्रा । कर्तृभ्यां । कर्तृभिः । ४–१ । ( ऋ रं ) स्वर० । कर्त्रे । कर्तृभ्यां । कर्तृभ्यः । ५–१ ( ऋतो ङ उः ) स च डित् । डित्वाट्टिलोपः । स्वर० कर्तुः । कर्तृभ्यां । कर्तृभ्यः । कर्तुः । कर्त्रोः ( ऋ रं ) स्वर० कर्तृणां ( नुडामः । नामि ) ७–१ ( ङौ ) स्वर० । कर्तरि । कर्त्रोः ( ऋ रं ) कर्तृषु ( किला० ) एवं नप्तृनेष्टृत्वष्टृक्षत्तृहोतृप्रशास्तृपोतृप्रभृतयोपि तथा अन्येपि तृप्रत्ययान्ता अवसेयाः । तृप्रत्ययस्यार्थवतो ग्रहणेन नप्त्रादीनामव्युत्पन्नानां संज्ञाशब्दानां ग्रहणं न भवत्यतस्तेषां पृथगुपादानं । अर्थवतो ग्रहणे नानर्थकस्येति ज्ञापकात् । व्युत्पत्तिपक्षे तु तृग्रहणेनैव सिद्धे नप्त्रादिग्रहणं नियमार्थं । सिद्धे सत्यारंभो नियमायेति ॥

उकारांतस्यापि क्रोष्टुशब्दस्य विशेषः । [ उकारांतस्यापि क्रोष्टुशब्दस्य पंचस्वघिषु तृप्रत्ययांतस्येव रूपं वक्तव्यं । ] क्रोष्टा । क्रोष्टारौ । क्रोष्टारः । अघिष्विति विशेषणात् । हे क्रोष्टो । हे क्रोष्टारौ । हे क्रोष्टारः । क्रोष्टारं । क्रोष्टारौ । शसि परे तृप्रत्ययान्तवद्भावाभावात् । क्रोष्टून् । [ तृतीयादौ स्वरादौ तृप्रत्ययांतता वा वक्तव्या ] क्रोष्ट्रा क्रोष्टुना । क्रोष्टुभ्यां । क्रोष्टु-

भिः। क्रोष्ट्रे क्रोष्टवे। क्रोष्टुभ्यां। क्रोष्टुभ्यः क्रोष्टुः। क्रोष्टोः। क्रोष्टुभ्यां। क्रोष्टुभ्यः। क्रोष्टुः क्रोष्टोः। क्रोष्ट्रोः क्रोष्ट्वोः। क्रोष्टूनां। [कृताकृतप्रसंगी यो विधिः स नित्यः। ] नित्यानित्ययोर्मध्ये नित्यविधिर्बलवान् इति प्रथमं नुडागमे कृते हसादित्वात्तद्भावो नास्ति। क्रोष्टरि क्रोष्टौ। क्रोष्ट्रोः क्रोष्ट्वोः। क्रोष्टुषु॥

क्रुश् आह्वाने। तुन्प्रत्ययः गुणः (छशषराजादेः षः। ष्टुभिः ष्टुः) क्रोष्टु इति जातं। उका० यद्यपि क्रोष्टुशब्द उकारांतस्तथापि तस्य अधिषु धिवर्जितेषु पंचसु वचनेषु तृप्रत्ययांतस्येव रूपं तृप्रत्ययांतत्वं कर्तव्यं। ततः (स्तुरार्) इति आरादिकमित्यर्थः। ततः पंचसु कर्तृवत। सौ (स्तुरार्। सेरा) धौ तु भानुवत्। द्वित्वबहुत्वयोः कर्तृवत् (स्तुरार्) स्वर०। शसि विषये तृप्रत्ययः विद्यतेऽस्येति स तृप्रत्ययवान् तस्य भावः। यद्वा तृप्रत्ययेन तुल्यं तृप्रत्ययवत् तस्य भावः तृप्रत्ययवद्भावस्तस्य अभावस्तृप्रत्ययवद्भावाभावस्तस्मात्। क्रोष्टून् इति भानुवत्साध्यः। तृतीया आदिर्यस्य स तृतीयादिः तस्मिंस्तृतीयादौ किंविशिष्टे तृतीयादौ स्वरादौ तृप्रत्ययांतो वा विकल्पेन भवति एकत्र पक्षे कर्तृवत् द्वितीये पक्षे भानुवत् साध्यः। तु तृतीयादौ। हसादौ त्वविशेषः। स्वरादौ च तृप्रत्ययांतता। उकारस्य वा ऋकार इत्यर्थः। ऋत्वे कर्तृवत्। उत्वे भानुवत्। आमि तु विशेषः। क्रोष्टु आम् इत्यत्र (नुडामः) इति नुडागमप्राप्तौ (तृतीयादौ स्वरादौ वा) इति तृप्रत्ययांतवद्भावस्य च प्राप्तौ नुडागम एव स्यादित्याह आमि तु नुडागमे कृते हसादित्वात्तद्भावस्तृप्रत्ययांतत्वं नास्ति न भवति। अत्राह परः। ननु यथा उकारांतत्वे क्रोष्टूनामिति रूपस्य सिद्धिर्भवति तथा पूर्वं तृप्रत्ययभावं विधाय पश्चान्नुडागमः क्रियतां। तत्रोच्यते (कृता०।) कार्यान्तरे कृतेपि अकृतेऽपि प्रसंगः प्रयोगप्राप्तिरस्यास्तीति कृताकृतप्रसंगी एवंभूतो यो विधिः स नित्यः। नित्यानित्ययोर्नित्यो विधिः बलवानिति। एवमभिप्रायः। तृप्रत्ययभावे कृतेप्यकृतेपि नुडागमो नित्यः स्यादेवं तदागमे च हसादित्वं सिद्धमेव। अतः स्वरांतत्वाभावाद्वा तृप्रत्ययांतत्वं न। किंतु। क्रोष्टूनामित्येकमेव रूपं (नुडामः। नामि) सप्तम्येकवचने (तृतीयादौ स्वरादौ वा) इत्येकत्र तृप्रत्यये कृते (ङौ) इत्यर्। (स्वर०) क्रोष्टरि। द्वितीयपक्षे उकारांतत्वात् (ङेरौ ङित्) टिलोपः। स्वर० क्रोष्टौ। शेषं सुकरं। संबोधने अधिष्विति विशेषणात्। (समान द्वेर्लोपो०) धौ हे क्रोष्टो। हे क्रोष्टारौ। हे क्रोष्टारः॥

---

१ नित्यश्च अनित्यश्च नित्यानित्यौ तयोः नित्यानित्ययोर्मध्ये यो नित्यो विधिः स बलवान्। कृताकृतप्रसंगी विधिः कृतेपि भवति अकृतेपि भवति स नित्यः अतः कारणात् क्रोष्टूनां भवति॥ २ च वक्तव्य—इ०पा०।

ऋकारांता लवर्णांता एकारांताश्चाप्रसिद्धाः। ऐकारांतः पुँल्लिंगः सुरैशब्दः (रै स्भि) रैशब्दस्याकारादेशो भवति सकारभकारादौ विभक्तौ परतः। सुराः। स्वरादौ सर्वत्रायादेशः। सुरायौ। सुरायः। हे सुराः। हे सुरायौ। हे सुरायः। सुरायं। सुरायौ। सुरायः। सुराया। सुराभ्यां। सुराभिः। इत्यादि।

ऋकारांतानुक्त्वा अन्यानाह। ऋकारांता लवर्गांता एकारांताश्च शब्दा अप्रसिद्धाः अप्रतीताः क्वचित् प्रयोगे न दृश्यन्ते क्वचित्प्रयोगे दृश्यन्ते (ङेरक्) इत्यादौ। ऐकारांतः सुरैशब्दः। सूत्रं। रै ६–१ सांके० स् च भ् च स्भ् तस्मिन्। ७–१। स्भि। स्वर० रैशब्दस्य विभक्तिसंबंधिनि सकारे भकारे च परे आकारो भवति। षष्ठीनिर्दिष्टस्येति अंतस्य। १–१। (स्तो०) सुष्ठु शोभनो राः द्रव्यं यस्येति सुराः। स्वरादौ तु (ऐ आय्) स्वर०समानाभावात् (अम्शसोरस्य। सो नः पुंसः) नुडागमश्च भवति।

ओकारांतः पुँल्लिंगो गोशब्दः (ओरौ) ओकारस्यौकारादेशो भवति पंचसु परेषु। गौः। गावौ। गावः। हे गौः। हे गावौ। हे गावः (आमूशसि) ओकारस्यात्वं भवति अमि शसि च परे। गां। गावौ। गाः। गवा। गोभ्यां। गोभिः। गवे। गोभ्यां। गोभ्यः। (ङस्य) इत्यकारलोपः। गोः। गोभ्यां। गोभ्यः। गोः। गवोः। गवां (श्रुतौ गोरामः) श्रुतौ गोशब्दात्परस्यामो नुडागमो भवति। गोनां। गवि। गवोः। गोषु। एवं सुद्योशब्दः। औकारांतः पुँल्लिंगो ग्लौशब्दस्तस्य हसादावविशेषः स्वरादावावादेशः। ग्लौः। ग्लावौ। ग्लावः। ग्लावं ग्लावौ। ग्लावः। ग्लावा। ग्लौभ्यामित्यादि। इति स्वरान्ताः पुँल्लिंगाः॥

ओकारांतः पुँल्लिंगो गोशब्दः। दशार्थवाचकः। यतः "दिग्दृष्टिदीधितिस्वर्गवज्रवाग्बाणवारिषु। भूमौ पशौ च गोशब्दो विद्वद्भिर्दशधा मतः॥ १॥" दशस्वप्यर्थेषु गोशब्दः पुंस्त्रीलिंगे ज्ञेय इति हेमाचार्या आहुः। व्याडिरप्येवमेवाह। गौडस्तु "स्वर्गे रश्मौ च वज्रे च बलीवर्दे च गौः पुमान्। स्त्री सौरभेय्यां दिग्वाग्दृग्भूष्वप्सु भूम्नि

१ (गोर्नुड्वा छन्दसि) इति केषांचिन्मते सूत्रम्।

च " इति विशेषमाह । गम्लृ गतौ । गम् गच्छतीति गौः वृषभः । गमेर्डोप्रत्ययः । डित्वाट्टिलोपः । स्वर० गो इति जातं । गोशब्दस्य पंचसु विशेषः । सूत्रं । ओ ।६–१ ( ङस्य ) इत्यकारलोपः ( स्रो० ) औ । १–१ सांके० ( नामिनो रः ) ओकारांतशब्दसंबंधिन ओकारस्य औकारादेशो भवति पंचसु परेषु । अम्विषये तु ( आम्शसि ) इति विशेषकथनात् अम्वर्जितेषु पंचसु द्वितीयाद्वित्वं यावदौकारः । १–१ ( स्रो० ) १–२ ( औ आव् ) स्वर० अमि तु विशेषः । सूत्रं । आ १–१सांके० अम् च शस् च अम्शस् तस्मिन् । ७–१ स्वर० ( सवर्णे० ) ओकारस्यामि शसि च परे आकारो भवति ( सवर्णे० मोऽनु० ) द्वित्वे ( औ आव् ) बहुत्वे आकारे कृते ( सवर्णे० स्रो० ) यदादेशस्तद्वद्भवतीति ओकारस्यासमानत्वान्न ( सो नः पुंसः ) इति शसो नकारः । टादौ स्वरादौ ( ओ अव् ) हसादावविशेषः । पंचमीषष्ठ्येकवचने ( ङस्य ) इति सूत्रेण अकारलोपः ( स्रो० ) केचित्तु आमि ( ऋगंते गोराम् ) इति सूत्रान्तरेण नुडागममप्याहुः छंदसि । गोनां गवां । शेषं सुगमं । एवं द्योशब्दः स्त्रीलिंगे तु गौणत्वे सुद्योशब्दः । सुष्ठु शोभना द्यौः स्वर्गो यस्य स सुद्यौः इन्द्रः ( ओरौ ) सुद्यौः । सुद्यावौ । सुद्यावः । सुद्यां । सुद्यावौ । सुद्याः । सुद्यवा । सुद्योभ्यां । सुद्योभिरित्यादि । हे सुद्यौः । इत्यादि । औकारांतः पुंल्लिंगो ग्लौशब्दः चंद्रार्थः । ग्लै हर्षक्षये । ग्लायति कृष्णपक्षे इति ग्लौः । औणादिको डौ प्रत्ययः ( डिति टेः ) स्वर० ग्लौ इति जातं । तस्य हसादौ अविशेषः । स्वरादौ तु सर्वत्र ( औ आव् ) ग्लौः । ग्लावौ । ग्लावः । इति स्वरांतपुंल्लिंगसाधनम् ॥

अथ स्वरांताः स्त्रीलिंगाः प्रदर्श्यन्ते ॥ आकारांतो गंगाशब्दः । ( आबतः स्त्रियाम् ) अकारान्तात्स्त्रियां वर्तमानादाप्प्रत्ययो भवति । तस्य नामसंज्ञायां स्यादयः । प्रथमैकवचने सि । ( आपः ) आबंतात्परस्य सेर्लोपो भवति । गंगा । ( औरी ) आबंतात्पर औ ईकारो भवति । गंगे । गंगाः ( धिरिः ) आबंतात्परो धिरिर्भवति । हे गंगे । हे गंगे । हे गंगाः । [ अंबादीनां धौ ह्रस्वः ] आबंतानां अंबादीनां धौ परे ह्रस्वो भवति । हे अंब । हे अक्क । हे अल्ल । [ असंयुक्तानां डलकवतीनां प्रति-

---

१ द्वितीयाद्विवचनं०इति पाठः । २ तत्रावन्त इति पाठः । अत्रैवाग्रे " आवतः स्त्रियां " इति सूत्रं वृत्तिश्च कृता दृश्यते । ३ ईकारमापद्यते इति पाठः ।

षेधो वाच्यः ] हे अंबाले । हे अंबाडे । हे अंबिके । इत्यादौ ह्रस्वो न भवति । गंगां । गंगे । गंगाः । पुंस इति विशेषणात्स्त्रियां शसि सकारस्य नकारो न भवति । ( टौसोरे ) आबंतस्य टौसोः परयोरेत्वं भवति । अयादेशः । गंगया । गंगाभ्यां । गंगाभिः ( ङितां यट् ) आबंतात्परेषां ङेङसिङस्ङि इत्येतेषां यडागमो भवति । टकारः स्थाननियमार्थः । गंगायै । गंगाभ्यां । गंगाभ्यः । गंगायाः । गंगाभ्यां । गंगाभ्यः । गंगायाः । गंगयोः । [ आबन्तादीबंतादामो नुड्वक्तव्यः ] गंगानां ( आम्ङेः ) इत्याम् । गंगायां । गंगयोः । गंगासु । एवं श्रद्धाखट्वामेधामालामहिलाशालादोलाप्रभृतयः ॥

अथ स्वरांतस्त्रीलिंगसाधनमुच्यते ॥ आकारांतः शब्दः स्त्रीलिंगे नास्ति । तत्राऽऽबंतो गंगाशब्दः । १–१ । सूत्रं ( आपः ) आप् । ५–१ स्वर० ( स्त्रो० ) ( आबतः स्त्रियां ) इति सूत्रेण यः आप्प्रत्ययः कृतस्तदंताच्छब्दात्परस्य सेर्लोपो भवति । अनेन सिलोपः द्वित्वे सूत्रं ( औरी ) औ१–१ सां० ई१–१ सांकेतिकं । आबंता० वृत्तिः कण्ठ्या न वरं । औकार ईत्वं आपद्यते प्राप्नोति । अनेन औस्थाने ई ( अ इ ए ) बहुत्वे ( सवर्णे० स्त्रो० ) धौ तु । सूत्रं ( धिरिः ) धि । १–१(स्त्रो०) इः१–१ (स्त्रो०)नामिनो०) केचित्तु ( धिरी ) इति दीर्घं ईकारं पठंति ततः (औ) इत्यस्मिन्सूत्रे दीर्घईकारानुवृत्तिं गृह्णंति । ततो जरसीति रूपं साधयंति । आबंता० अनेन धिस्थाने इः ( अ इ ए ) अंबादीनां धिविषये विशेषमाह । अंबादीनां धौ ह्रस्वो भवति । ततः ( समानाद्धेर्लो०) हे अंब । हे अंबे । हे अंबाः । एवं । हे अक्क । हे अल्ल । हे अत्त । एते त्रयः एकार्थाः । गृहमध्यस्थवृद्धस्त्रीवाचकाः । अंबादीना शब्दानां द्विस्वराणामेव धौ ह्रस्वता । अत एव (असंयुक्तानां डलकवतीनां प्रतिषेधो वाच्यः ) इति वार्तिकम् । तेन हे अंबाडे हे अंबाले हे अंबिके इत्यादौ न ह्रस्वः । द्वितीयैकवचने (अम्श० । मोनु० ) द्वित्वे प्रथमावत् । शसि । ( अम्श० । स्त्रो० ) पुल्लिंगाभावात् । ( सो नः पुंसः ) इति न भवति । ३–१ । सूत्रं ( टौसोरे । ) टा च ओस् च टौसौ तयोः टौसोः । ७–२ स्व० ( स्त्रो० ) ए १–१ । सांके० ( नामिनो० ) सिद्धं द्विपदं सूत्रं । आप्प्रत्ययांतस्य टा इति तृतीयैकवचने ओस् इति षष्ठीसप्तमीद्विवचने परे ए भवति । षष्ठीनिर्दिष्टस्येति अंतस्य । अनेन ( ए अय् ) स्वर० हसादौ तु अविशेषः । ४–१ सूत्रं ( ङितां य० ) ङ् इत् येषां ते ङितः तेषां ङितां । ६–३ स्वर० ( मोनु० ) यट् । १–१ ( ह-

से०) द्विपदं । आबं०आप्प्रत्ययांताच्छब्दात् परेषां अग्रे वर्तमानानां ङितां ङेङसिङस-ङिइत्येतेषां वचनानां यट् आगमो भवति सस्वर एव । टित्त्वादादौ । अनेन यडागमः सस्वर एवेति टित्त्वात् यट् आदौ ( एऐ ऐ ) पंचमीषष्ठ्येकवचने यडागमे कृते ( सवर्णे० । स्रो० ) ६–२ ( टौसोरे । ए अय् ) स्वर० ( स्रो० ) बहुत्वे नुडागमः स्वर० ( मोनु० ) ७–१ ( आम्ङेः ) ततो यदादेशस्तद्वद्भवतीति न्यायात् यडागमः । स्वर० ( मोनु० ) शेषं सुकरं । एवं श्रद्धादयोपि ज्ञेयाः ॥

**आबन्तः सर्वाशब्दः । सर्वा । सर्वे । सर्वाः । हे सर्वे । हे सर्वे । हे सर्वाः । सर्वां । सर्वे । सर्वाः । सर्वया । सर्वाभ्यां । सर्वाभिः । सर्वादीनां तु ङित्सु विशेषः ( यटोऽच्च ) आबंतात्सर्वादेः परस्य यटः सुडागमो भवति पूर्वस्य चापोऽकारो भवति । सर्वस्यै । सर्वाभ्यां । सर्वाभ्यः । सर्वस्याः । सर्वाभ्यां । सर्वाभ्यः । सर्वस्याः । सर्वयोः । सर्वासां । सर्वस्यां । सर्वयोः । सर्वासु ।**

आबंतः सर्वाशब्दः । तस्य तृतीयां यावत् गंगाशब्दवत् । सर्वा । सर्वे । सर्वाः सर्वां । सर्वे । सर्वाः । सर्वया । सर्वाभ्यां । सर्वाभिः । ङित्सु ङिद्वचनेषु विशेषः ( ङितां यट् ) इति यडागमे कृते । सूत्रं । यट् । ६–१ स्वर० ( स्रो० ) अत् । १–१ ( हसे०अतोत्युः । उ ओ । एदोतोतः ) च १–१ ( अव्य० । स्तोः श्चु० ) त्रिपदं । आबंता० अनेन यटः सुडागमः । टित्त्वादादौ । पूर्वस्य चापः । आप्प्रत्ययाकारस्य अकारो भवति । ४–१ स्वर० ( एऐ ऐ ) सर्वस्यै । ५–१ । ६–१ ( ङितां० । यटोच्च ) आकारस्य अकारः । स्वर० ( सवर्णे० स्रो० ) ७–१ ( आम्ङेः ) आमि कृते ( ङितां यट् । यटोच्च ) स्वर० ( सवर्णे० मोनु० ) ६–२ । ७–२ ओसि ( टौसोरे । एअय् ) स्वर० ( स्रो० ) ६–३ ( सुडामः ) स्वर० ( मोनु० ) संबोधने तु गंगावत् । एवमाबंताः सर्वादयो अन्येपि विश्वादयः । विश्वा अन्या अन्यतरा इतरा कतरा कतमा समा सिमा नेमा एका पूर्वा परा दक्षिणा उत्तरा अपरा अधरा स्वा अंतरा । उभयशब्दस्य तु ईप्रत्ययः । उभयी । उभय्यौ । उभय्यः । नदीशब्दवत् । द्वितीयातृतीयाशब्दयोर्ङित्सु वा ङित्त्वं । ४–१ द्वितीयस्यै द्वितीयायै । ५–१ ६–१ द्वितीयस्याः द्वितीयायाः । ७–१ द्वितीयस्यां द्वितीयायां । द्विशब्दस्य तु त्यदादेष्टेरित्यकारे कृते ( आबतः स्त्रियां ) ततो गंगाशब्दाद्द्विवचनवत्साध्यः । द्वे । द्वे । द्वाभ्यां । द्वाभ्यां । द्वाभ्यां । द्वयोः । द्वयोः । एवं । उभे । उभे ।

**आकारांतो जराशब्दः ॥ ( जरायाः स्वरादौ जरस् वा वक्त-**

व्यः ) जरा । जरसौ जरे । जरसः जराः । हे जरे । हे जरसौ हे जरे । हे जरसः हे जराः । जरां जरसं । जरसौ जरे । जरसः जराः । जरसा जरया । जराभ्यां । जराभिः । जरसे जरायै । जराभ्यां । जराभ्यः । जरसः जरायाः । जराभ्यां । जराभ्यः । जरसः जरायाः । जरसोः जरयोः । जरसां जराणां । जरसि जरायां । जरसोः जरयोः । जरासु ।

आबंतस्यापि जराशब्दस्य विशेषः । जरायाः इति । जराशब्दस्य स्वरादौ विभक्तौ जरस् वा वक्तव्यः । स्वरे परे विकल्पेन जरस् आदेशः कर्तव्यः। ( गुरुः शिव सर्वस्य वक्तव्यः) साधनं। स्वरादौ एकस्मिन्पक्षे गंगावत् । द्वितीयपक्षे जरस्आदेशे कृते । स्वर० शेषं सुगमं। जरा । जरसौ जरे। जरसः जराः। इत्यादि । सोमपाक्षीरपादयस्तु आप्रत्ययांता न किंतु आकारांताः क्विंताः। अतस्तेषां साधना रूपाणि च पुँल्लिंगवत् ।

इकारान्तस्य स्त्रीलिङ्गस्य बुद्धिशब्दस्य प्रथमाद्वितीययोः हरिवत्प्रक्रिया । बुद्धिः । बुद्धी । बुद्धयः । हे बुद्धे । हे बुद्धी । हे बुद्धयः । बुद्धिं । बुद्धी । बुद्धीः । स्त्रीत्वाच्छसो नत्वाभावः । बुद्ध्या । बुद्धिभ्यां । बुद्धिभिः (इदुद्भ्यां ) स्त्रियां वर्तमानाभ्यां इकारोकाराभ्यां परेषां ङितां वचनानां[1] वा अडागमो भवति । बुद्ध्यै बुद्धये । बुद्धिभ्यां । बुद्धिभ्यः । बुद्ध्याः बुद्धेः । बुद्धिभ्यां । बुद्धिभ्यः । बुद्ध्याः बुद्धेः । बुद्ध्योः । बुद्धीनां ( स्त्रियां योः ) इश्च उश्च युः तस्मादिवर्णांतादुवर्णांताच्च स्त्रियां वर्तमानात्परस्य ङेराम्वा भवति । बुद्ध्यां अडागमाभावे आमोऽप्यभावः । बुद्धौ । बुद्ध्योः । बुद्धिषु । एवं मतिभूतिधृतिरुचिकृतिसिद्धिशांतिभ्रांतिआलिशक्तिप्रभृतयः ।

इकारांतो बुद्धिशब्दस्तस्य द्वितीयाद्विवचनं यावत् हरिशब्दवत्प्रक्रिया ( औयू । एओ जसि ) इत्यादि । शसि ( अम्श० शसि ) इति दीर्घः ( स्त्रो० ) स्त्रीलिंगत्वान्नत्वाभावः ( सो नः पुंसः ) इति सूत्रेण नकारो न । तृतीयैकवचने अस्त्रियामिति कथनात् ( टानास्त्रियां ) इत्यस्य प्रतिषेधः । किंतु ( इ यं स्वरे ) स्वर० ङित्सु रूपद्वयं

१ वचनादिति पाठः ।

एकत्र हरिवत् ( ङिति ङस्य । ङेरौ ङित् ) इत्यादिसूत्राणि । अन्यत्र सूत्रं ( इदुद्भ्यां ) इश्च उश्च इदुतौ ताभ्यां इदुद्भ्यां । ५–२ सिद्धं एकपदं । स्त्रियां० अत्र नित्यं स्त्रियां वर्तमानाभ्यामिकारोकाराभ्यामिति व्याख्येयं । तेन शुचिशब्दोऽनियतलिंगोऽतो हरिवत् ज्ञेयः । न तु विकल्पः अनेन ४–१ । ५–१ । ६–१ । ७–१ वा अडागमः । टित्त्वादादौ ( इयं० ) ४-१ ( एऐऐ ) ५-१। ६-१ ( इयं० ) स्वर० ( सवर्णे स्रो० ) पक्षे हरिवत् । ७–१ । सूत्रं ( स्त्रियां योः ) स्त्री । ७–१ ( स्त्रियां योः । स्त्रीभ्रुवोः ) स्वर० ( मोनु० ) इश्च उश्च युस्तस्मात् योः । ७–१। ( ङिति ङस्य । स्रोः०) द्विपदं। स्त्रीलिंगे वर्तमानात् इवर्णांतात् उवर्णांताच्च शब्दात्परस्य ङेः आम आदेशो भवति । वाग्रहणान्नदी बधूजंब्वादीनामपि ङेराम् । अट्साहचर्य्यात् यस्मिन्पक्षे अडागमस्तत्रैव ङेः आम् भवति । अत एवाग्रे वक्ष्यति अडागमाभावे आमोऽप्यभावः इति । अनेन ङेः आम् ( इदुद्भ्याम् ) इति वा अडागमः ( इयं० ) स्वर० ( सवर्णे० मोनु० ) ७–३ । ( क्लिा० ) शेषं सुगमं । संबोधने हरिवत् ( समानाद्धेर्लोपोऽधातोः । धौ) एवं मतिभूतिधृतिरुचिऋद्धिवृद्धिसिद्धिकांतिशांतिक्षांतिनाभिप्रभृतयोऽपि इकारांताः शब्दा एतैरेव सूत्रैः सिद्ध्यंति।

एवं धेनुरज्जुप्रभृतयोऽप्युकारांताः एतैरेव सूत्रैः सिद्ध्यंति । धेनुः । धेनू । धेनवः । हे धेनो । धेनुं । धेनू । धेनूः । धेन्वा । धेनुभ्यां । धेनुभिः । धेन्वै धेनवे । धेनुभ्यां । धेनुभ्यः । धेन्वाः धेनोः । धेनुभ्यां । धेनुभ्यः । धेन्वाः धेनोः । धेन्वोः । धेनूनां । धेन्वां धेनौ । धेन्वोः । धेनुषु ।

एवं उकारांता धेनुरज्जुतनुचंचुप्रभृतयोऽपि ज्ञेयाः ।

ईकारांतः स्त्रीलिंगो नदीशब्दः ( हसेपः सेर्लोपः ) हसांतादीबंताच्च परस्य सेर्लोपो भवति ॥ नदी । नद्यौ । नद्यः । ( धौ ह्रस्वः ) ईवर्णोवर्णयोरधातोः स्त्रियां धौ परे ह्रस्वो भवति । हे नदि । हे नद्यौ । हे नद्यः । नदीं । नद्यौ । नदीः । नद्या । नदीभ्यां । नदीभिः । ( ङितामट् ) स्त्रियामीकारांतादूकारांताच्च ङितां वचनानामडागमो भवति । नद्यै । नदीभ्यां । नदीभ्यः । नद्याः । नदीभ्यां । नदीभ्यः । नद्याः । नद्योः । नदीनां । नद्यां ।

१ स्त्रीलिंगे वर्तमानादित्यन्यत्र पाठः ।

नद्योः । नदीषु । एवं गौरीसरस्वतीब्राह्मणीकुमारीकिशोरीकलभीप्रभृतयः ।

ईकारांतो नदीशब्दः । सूत्रं । हसश्च ईप् च हसेप् तस्मात् हसेपः ५-१ स्वर० ( स्रो० ) सि ६-१ ( ङिति ङस्य । स्रो० ) लोपः १-१ ( स्रो०नामिनो० ) जलतुं० त्रिपदं । हसांतात् व्यंजनांताच्छब्दात्परस्य ईप्प्रत्ययांताच्च शब्दात्परस्य सेर्लोपो भवति । हसांतास्तु अग्रे हसांतपुँल्लिगे भविष्यंति[1] । अत्र तु ईबंतात् । नदी । १-१ । ( सि ) अनेन सिलोपः । द्वित्वबहुत्वयोः ( इ यं स्वरे ) स्वर० धौ तु । सूत्रं । धि ७-१ । ( ङेरौ ङित् ) टेर्लोपः । स्वर०ह्रस्व । १-१ । ( स्रो० ) द्विपदं । इवर्णोवर्णयोः । अधातोरिति धातुवर्ज्जशब्दस्य आकिवंतस्येत्यर्थः । अत्र अनियुवंताः ईकारोकारांता नित्यस्त्रीलिंगाः शब्दाः स्त्रीशब्दश्च एतत्संबंधिनोरेव इवर्णोवर्णयोरिति व्याख्येयं । अनियुवंत इति किं । हे श्रीः । हे भ्रूः । हे भूः । शेषं कंठ्यं । अत्र वर्णग्रहणं ह्रस्वे कृते ( धौ ) इति सूत्रस्य प्राप्तिनिषेधार्थं । अनेन ह्रस्वः ( समानाद्धेर्लोपः० ) हे नदि । हे नद्यौ । हे नद्यः । अमि २-१ ( अम्शसो० मोनु० ) नदीम् २-२ ( इ यं० ) स्वर० नद्यौ । शसि २-३ ( अम्श० । स्रो० ) नदीः । नदी । ३-१ । टा ( इयं० ) स्वर० ४-१ । सूत्रं ( ङितामट् ) ङ् इत् येषां ते ङितस्तेषां ङितां । ६-३ स्वर० अट् । १-१ । ( हसे० ) द्विपदं । स्त्रियामिति नित्यं स्त्रीलिंगे वर्तमानाभ्यां ईकारोकाराभ्यां परेषां ङितां ङेङसि ङस् ङि इत्येतेषां अडागमो भवति । अनेन अडागमः ( इ यं स्वरे ) स्वर० ( एऐ ऐ ) ५-१ । ६-१ । अडागमः ( इ यं स्वरे ) स्वर० ( सवर्णे० स्रो० ) ६-२ । ७-२ । ( इ यं स्वरे ) स्वर० ६-३ ( नुडामः ) स्वर० ( मोनुस्वारः ) ७-१ ( स्त्रियां योः । ङितामट् । इयं० ) । ७-३ ( क्विलात्षः सः० ) एवं नदीशब्दवत् गौरीसरस्वतीब्राह्मणीकुमारीनारीसारङ्गीनारङ्गीभृङ्गीप्रभृतयः एतैरेव सूत्रैः साध्याः ।

लक्ष्मीशब्दस्य ईबंतत्वाभावात्सेर्लोपो नास्ति । लक्ष्मीः । लक्ष्म्यौ । लक्ष्म्यः । हे लक्ष्मीः । शेषं नदीवत् । स्त्रीशब्दस्य ईबंतत्वात्सिलोपोऽस्ति । स्त्री । ( स्त्रीभ्रुवोः ) स्त्रीशब्दस्य भ्रूशब्दस्य च स्वरे परे इयुवौ भवतः । स्त्रियौ । स्त्रियः । हे स्त्रि ( वाम्शसि ) स्त्रीशब्दस्य अमि शसि च परे वा इय् भवति । स्त्रियं स्त्रीं । स्त्रियौ । स्त्रियः स्त्रीः । स्त्रिया । स्त्रीभ्यां । स्त्रीभिः । शेषं नदीवत् ।

---

१ हसान्ता अग्रे हसांतपुंल्लिगे भविष्यंति—इत्यपि क्वचित्पाठः ।

ईकारांतो लक्ष्मीशब्दस्तस्य" ईबंतत्वाभावात् ईप्प्रत्ययांतत्वाभावात् ( हसेपः सेर्लोपः ) इति सेर्लोपो नास्ति न भवति । यतः ( लक्षेरीमुट् च ) इति सूत्रेण ईकारांतत्वात् । ततः १-१ ( स्त्रो० ) लक्ष्मीः लक्ष्म्यौ लक्ष्म्यः ( इ यं स्वरे ) स्वर० संबोधने हे लक्ष्मि ( धौ ह्रस्वः । समानाद्धे० ) चतुर्थ्यादौ ( ङितामट् ) सप्तम्यां ( स्त्रियां योः ) इत्यादि शेषं नदीतुल्यं । यतः । "अवीलक्ष्मीतरीतंत्रीतंद्रीधीह्रीश्रियां पुरः । भीशब्दाच्च न सेर्लोपः स्त्रीलिंगे स्यात्कदाचन ॥ " अवीः ऋतुमती स्त्री । लक्ष्मीः प्रसिद्धा । तरीर्नौः । तंत्रीः वीणा । तंद्रीः निद्रा । धीः बुद्धिः । ह्रीः लज्जा । श्रीः लक्ष्मीः । भीर्भयम् । स्त्रीशब्दस्य ईबंतत्वात् ईप्प्रत्ययांतत्वात् सेर्लोपोऽस्ति हसेपः सेर्लोपो भवति । ष्ट्यैधातुः स्त्यैधातुश्च शब्दसंघातयोः ( स्त्यायतेः स्त्रीत्वे ड्रट् ) इति रप्रत्ययः । डित्त्वाट्टिलोपः । ( संयोगांतस्य ) इति यकारलोपः । स्वर० ततः टित्त्वात् ( ष्ट्वितः ) इतीप् १-१ ( हसेपः० ) द्वित्वे सूत्रं स्त्रीशब्दस्य भ्रूशब्दस्य च अक्विबंतत्वेन अधातुत्वात् ( य्वोर्धातोः० ) इति इय् न स्यात् । तेन सूत्रांतरमाह ( स्त्रीभ्रुवोः ) स्त्री च भ्रूश्च स्त्रीभ्रुवौ तयोः स्त्रीभ्रुवोः ६-२ स्वर० स्त्रीशब्दस्य भ्रूशब्दस्य च स्वरे परे इयुवौ भवतः । स्त्रीशब्दस्य इय् भ्रूशब्दस्य उव् । अनेन इय् षष्ठीनिर्दिष्टस्येत्यंतस्य इय् । स्वर० बहुत्वेऽप्येवं २-१ सूत्रं ( वाम्शसि ) वा ३-१ ( अव्य० ) अम् च शस् च अम्शस् तस्मिन् अम्शसि ७-१ स्वर० ( सवर्णे० ) द्विपदं । अमि शसि च परे वा विकल्पेन इयुवौ भवतः । अत्र स्त्रीशब्द एव संभाव्यते भ्रूशब्दस्य भ्रू इति रूपस्यादृश्यमानत्वात् । उवग्रहणं तु संबंधैक्यात् । अनेन एकत्र इय् स्वर० ( मोनु० ) अन्यत्र ( अम्शसोरस्य । मोनु० ) स्त्रियं स्त्रीं । द्वित्वे प्रथमाद्वित्ववत् । स्त्रियौ । शसि परे ( वाम्शसि ) स्वर० ( स्त्रो० ) अन्यत्र ( अम्शसो० ) स्त्रियः स्त्रीः । ३-१ ( स्त्रीभ्रुवोः ) स्वर० स्त्रिया । स्त्रीभ्यां । स्त्रीभिः । शेषं चतुर्थ्यादौ नदीवत् । अस्यायमर्थः। ङेङसिङसङिषु ङितामट् कृत्वा इय् कर्तव्य इत्यर्थः । स्त्री । ४-१ ङे ( ङितामट् । स्त्रीभ्रुवोः ) स्वर० ( एएऐ ) स्त्रियै । स्त्रीभ्यां । स्त्रीभ्यः । स्त्री ५-१ ( ङितामट् । स्त्रीभ्रुवोः ) स्वर० ( सवर्णे० स्त्रो० ) स्त्रियाः । स्त्रीभ्यां । स्त्रीभ्यः । स्त्री ६-१ ङस् ( ङितामट् । स्त्रीभ्रुवोः ) स्वर० ( सवर्णे० स्त्रो० ) स्त्रियाः । स्त्री ६-२ ओस् ( स्त्रीभ्रुवोः ) स्वर० ( स्त्रो० ) स्त्रियोः । स्त्री ६-३ आम् ( नुडामः । ष्ऋर्नो० ) स्वर० ( मोनु० ) स्त्रीणां । स्त्रीणां अत्र ( स्त्रीभ्रुवोः । नुडामः ) इत्युभयोः प्राप्तौ विशेषत्वात् ( नुडामः ) इति नुडागम एव भवति । स्त्री । ७-१ ङि ( ङितामट् । स्त्रियां योः ) इत्याम् ( स्त्रीभ्रुवोः ) स्वर० ( सवर्णे० मोनु० ) स्त्रियां । स्त्री ७-२ । ओस् ( स्त्रीभ्रुवोः ) स्वर० ( स्त्रियां योः ) स्त्रियोः । स्त्री । ७-३ । सुप् ( क्विलात्षः० ) स्त्रीषु । हे स्त्रि ( धौ ह्रस्वः । समानाद्धे० ) हे स्त्रियौ । हे स्त्रियः ।

**श्रीः । श्रियौ । श्रियः । श्रियं । श्रियौ । श्रियः । श्रिया । श्री-**

भ्यां । श्रीभिः ( वेयुवः ) इयुवंतात् स्त्रियां वर्तमानाद्वा ङितां वचनानामडागमो भवति स्त्रियास्तु नित्यं । श्रियै श्रिये । श्रीभ्यां । श्रीभ्यः । श्रियाः श्रियः । श्रीभ्यां । श्रीभ्यः । श्रियाः श्रियः । श्रियोः । [ श्र्यादीनां वामो नुड्वक्तव्यः ] श्रियां श्रीणां । श्रियां श्रियि । ङौ परे अडागमाभावे आमोऽप्यभावः । श्रियोः । श्रीषु । एवं ह्रीधीप्रभृतयोऽप्यनीवंताः । एवं भ्रूशब्दो भूशब्दश्च । वधूकरभोरूकुरूकच्छूकंडूजंब्वादीनां तु नदीशब्दवद्रूपं ज्ञेयं । वधूः । वध्वौ । वध्वः । हे वधु । इत्यादि ।

अथ श्रीशब्दः । श्री १–१ सु ( स्रो० ) श्रीः । श्री १–२ औ ( य्वोर्धातोः० ) स्वर० श्रियः । २–१ । अम् ( य्वोर्धातो० ) स्वर० ( मोनु० ) श्रियं । श्रियौ । श्रियः । श्रिया । श्रीभ्यां । श्रीभिः । चतुर्थ्यादौ श्रीशब्दस्य विशेषमाह । सूत्रं ( वेयुवः ) वा । ३–१ । ( अव्य० ) इय् च उव् च इयुव् तस्मात् इयुवः ।९–१ । स्वर० । मध्ये ( अ इ ए ) नित्यं स्त्रियां वर्त्तमानात् इयंतात् उवन्ताच्च शब्दात्परेषां ङितां वचनानां विकल्पेन अडागमः स्यात् न तु स्त्रीशब्दस्य । यतः कालापके स्त्री नदीवत् । तथा च हैमे ( वेयुवोः । अस्त्रियां ) इति पूर्वस्य ( य्वोर्धातोः । वेयुवः० ) इति अनेन एकत्र अडागमः ( य्वोर्धातोः० ) स्वर० ( एऐऐ । ) अन्यत्र ( य्वोर्धातोः० ) स्वर० । ५–१ । ६–१ । पूर्वं ( य्वोर्धातोः० ) एकत्र ( वेयुवः ) इति अडागमः ( य्वोर्धातोः० ) स्वर० ( सवर्णे० स्रो० ) पक्षे । ५–१। ६–१ ( य्वोर्धातोः० ) स्वर०(स्रो०) ६–१ । ७–२ । ( य्वोर्धातोः० ) इत्यनेन इय् । स्वर० ( स्रो० ) ॥ श्र्यादीनां श्रीधीभीभूप्रभृतीनां आमः षष्ठीबहुवचनस्य वा नुट् वक्तव्यः । अनेन नुट् आगमः (ऋर्न्नो० ) स्वर० । श्रीणाम् । अन्यत्र इय् । स्वर० । ( मोनु० ) श्रियाम् । ७–१ । रूपद्वयं । एकत्र ( स्त्रियां योः ) इति ङेः आम् ( य्वोर्धातोः ) इति इय् । यदादेशस्तद्वद्भवतीति ( वेयुवः ) इत्यडागमः । स्वर० ( सवर्णे० । ) अन्यत्र ( य्वोर्धातोः० ) स्वर० । श्रियां श्रियि । ननु अडागमस्य अभावेपि ङेः आम् कथं न भवतीत्याह । अडागमाभावे आमोऽप्यभावः । यत्र प्रयोगे अडागमो न भवति । तत्र आमपि न भवति ङेः आम् न भवतीत्यर्थः । शेषं सुगमं । धौ धातुत्वाद्धेर्लोपो न । ह्रस्वता च न किंतु ( स्रो० ) हे श्रीः । द्वित्वे बहुत्वे ( य्वोर्धातोः० ) इति इय् । हे श्रियौ । हे श्रियः । एवं धीह्रीभीप्रभृतयोऽपि स्त्रीलिंगाः अनीवंताः ईप्प्रत्ययरहिताः शब्दाः साध्याः । सु-

१ कण्ठचम्–इ०पा० ।

धीसुश्रीसेनानीग्रामण्यादयः पुँल्लिंगवत् । ( वेयुवः ) इत्यत्र नित्यं स्त्रियामित्युक्तत्वात् स्त्रीवाचकत्वेपि सुश्रिये सुधिये इत्यादौ न विकल्पः । एवं ऊकारांतो भूशब्दः । भूः । १–१ । स्त्रो० । १–२ ( य्वोर्धातो:० ) भुवौ । भुवः । २–१ ( य्वोर्धातो० ) भुवं । भुवौ । भुवः । भुवा । भूभ्यां । भूभिः । भुवै भुवे । भूभ्यां । भूभ्यः । भुवाः भुवः । भ्रूशब्दस्य तु भ्रम चलने औणादिको डूप्रत्ययः । डकारष्टिलोपार्थः । भ्रमति चलतीति भ्रूः। इति अक्विबंतत्वात् अधातुत्वाच्च ( य्वोर्धातोरियुवौ स्वरे ) इति न भवति किंतु ( स्त्रीभ्रुवोः ) इति सूत्रेण उवादेशः । भ्रूः । भ्रुवौ । भ्रुवः। भ्रुवं । भ्रुवौ। भ्रुवः। भ्रुवा । भ्रूभ्यां । भ्रूभिः । ( वेयुवः। स्त्रीभ्रुवोः ) भ्रुवै भ्रुवे । भ्रूभ्यां। भ्रूभ्यः । भ्रुवाः भ्रुवः । भ्रूभ्यां भ्रूभ्यः । भ्रुवाः भ्रुवः । भ्रुवोः । भ्रुवां भ्रूणां । सप्तम्येकवचने भ्रुवां इति रूपसिद्धौ ( स्त्रीभ्रुवोः । वेयुवः । स्त्रियां योः ) भ्रुवि इति सिद्धं । भ्रुवोः । भ्रूषु । इयुवंतत्वाद्धौ न ह्रस्वता । हेभ्रूः । यद्वा धौ परे तु सुभ्रूशब्दः स्त्रीवदिति केचित् । तेन ह्रस्वः । हे सुभ्रु । सुभ्रुशब्दस्य धौ वा ह्रस्वता। तेन हे सुभ्रूः इत्यपि । वधूजंबूश्वश्रूशब्दादीनां नदीशब्दवत्प्रक्रिया । परं सिविषये ( स्त्रो०।) वधूः । वध्वौ (उवं ) वध्वः । वधूं ( अम्शसो:० मोनु० ) वध्वौ । वधूः । वध्वा । वधूभ्यां । वधूभिः ( ङिलामट् ) वध्वै । वध्वाः ( स्त्रियां योः । ङित्तामट् । उवं०_) वध्वां ( हे वधु । एवं चमूतनूजंबूकंडूकच्छूयवागूदिधिषूकद्रूचंचूकर्कंधूकरभोरूप्रभृतयः। स्वयंभूप्रमुखास्तु पुंवत्।

ऋकारान्तस्य मातृशब्दस्य पितृशब्दवत्प्रक्रिया । मातृ सि इति स्थिते ( सेरा पंचसु ) आत्वं ( डिति टेः ) माता । मातृ औ इति स्थिते ( अर् पंचसु ) ऋकारस्य अर् भवति स्यादिपंचसुवचनेषु। मातरौ। मातरः ( धेरर् ) हे मातः । हे मातरौ। हे मातरः। मातरं । मातरौ। शसि ( शसि ) इति दीर्घत्वं। मातॄः । मात्रा । मातृभ्यां । मातृभिः । मात्रे । मातृभ्यां । मातृभ्यः ( ऋतो ङ उः ) इति उकारः । मातुः । मातृभ्यां । मातृभ्यः । मातुः । मात्रोः । मातॄणां । ( ङौ ) अर् । मातरि । मात्रोः । मातृषु । स्वसृशब्दस्तु कर्तृशब्दवत् । स्त्रीलिंगत्वान्नत्वाभावो विशेषः ।

ऋकारांते स्त्रीलिंगे मातृशब्दस्य पितृशब्दवत्प्रक्रिया ( सेरा पंचसु ) इत्यर् । न वरं। शसि दीर्घ एव भवति । परं स्त्रीलिंगत्वात् ( सो नः पुंसः ) इति नत्वं न भवति । धौ

१ रूपद्वयम्–इ०पा० ।

( घेरर् ) एवं पितृष्वसृमातृष्वसृदुहितृयातृननान्दृशब्दाः। स्वसृशब्दस्तु कर्तृशब्दवत्। ( स्तुरार्० । सेरा० ) शसि स्त्रीलिङ्गत्वान्नत्वाभावः ( सो नः पुंसः ) इति न भवति इति विशेषः। स्वसृः। तृतीयादौ स्वरादौ ( ऋ रं० ) स्वर० ङसिङसोर्विषये ( ऋतो ङ उः ) ङिविषये ( ङौ ) इत्यर्। हे स्वसः ( घेरर् ) एवं ननांदृशब्दः।

एकारांतः स्त्रीलिंगो रैशब्दः। तस्य सुरैशब्दवत्प्रक्रिया। रै सि इति स्थिते ( रै स्भि ) इत्यात्वं। राः। रै औ इति स्थिते स्वरादौ सर्वत्रायादेशः। रायौ। रायः। इत्यादि। गोशब्दः पूर्ववत्। नौशब्दस्य ग्लौशब्दवत् प्रक्रिया। इति॥ इति स्वरांताः स्त्रीलिंगाः॥

रैशब्दः सुरैशब्दवत्। राः ( रै स्भि। ) रायौ। रायः। इत्यादि। रैशब्दः पुंस्त्रीलिंगे वर्तते तथामरकोषे " अर्थरैविभवा अपि " इति पुँल्लिगे एव उक्तः। अत्र तु स्त्रीलिंगे एव उक्तस्तच्चिन्त्यम्। गोशब्दः पुंवत्। ( ओरौ ) गौः। गावौ। गावः। ( आम्शसि ) गां। गावौ। गाः। गवा। गोभ्यां। गोभिः। इत्यादि। अत्रापि गोशब्दो दशार्थवाची एवं द्योशब्दोपि। नौशब्दो ग्लौशब्दवत्। नौः। नावौ। नावः॥ इति स्वरांतस्त्रीलिंगसाधनं ज्ञेयम्।

अथ स्वरांताः नपुंसकलिंगाः प्रदर्श्यंते। अकारांतो नपुंसकलिंगः कुलशब्दः। तस्य प्रथमाद्वितीयैकवचने ( अतोऽम् ) अकारांतान्नपुंसकलिंगात्परयोः स्यमोरम् भवत्यधौ। अमो ग्रहणं लुग्व्यावृत्त्यर्थं। ( अम्शसोरस्य ) इत्यकारलोपः। कुलं २। हे कुल ( ईमौ ) नपुंसकलिंगात्पर औ ईकारमापद्यते ( अइ ए ) कुले २। ( जस्शसोः शिः ) नपुंसकलिंगात्परयोः जस्शसोः शिर्भवति। शकारः सर्वादेशार्थः। [ शुरुः शिश्च सर्वस्य वक्तव्यः ] षष्ठ्या निर्दिष्टस्येत्यस्यापवादः।

अथ स्वरांतनपुंसकलिंगसाधनं॥ तत्र अकारांतः कुलशब्दः तस्य प्रथमाद्वितीयैकवचने। सूत्रम्। ( अतोम् ) अत् ५-१स्वर० ( स्रो०। ) तत्प्रत्ययांतं वा। अम्१-१ ( हसे० ) मध्ये ( अतोत्युः। उओ। एदो० ) द्विपदं। अकारांतात् नपुंसकलिंगात्परयोः स्यमोः सिअम् इत्येतयोरम् भवति। अधौ घेरम् न भवतीत्यर्थः। ननु स्यमोर्म् क्रियतां किं अम् इत्यकारग्रहणेन। उत्यं। अजरसमित्यादिसाधनार्थं अमो अम्करणे हेतु-

माह । अमो ग्रहणं लुग्व्यावृत्त्यर्थं । अम इति । अम्स्थाने पुनर्यत् अम्करणं तत् (नपुंसकात्स्यमोर्लुक् ) इति सूत्रनिषेधार्थं । अयमर्थः । अकारात्परयोः स्यमोर्लुग्न भवतीति भावः । अनेन स्यमोरम् ( अम्शसोरस्य । मोनु० ) १–२ । २–२ । सूत्रं ( ईमौ ) ई। २–१ ( अम्श० ) औ । १–१ । सांके० स्वर० । द्विपदं । नपुंसकलिंगात्पर औ ईकारमापद्यते प्राप्नोति दीर्घ ईकारस्तु वारिणी दधिनीइत्यादिरूपसिद्ध्यर्थः । अनेन औ स्थाने ईकारः ( अ इ ए । ) १–३।२–३ सूत्रं ( जस्शसोः शिः ) जस् च शस् च जस्शसौ तयोर्जस्शसोः ६–२ स्वर० ( स्त्रो० ) । शि । १–१ (स्त्रो०) द्विपदं। नपुंसकलिंगात्परयोः जस्शसोः शिर्भवति । शिरिति शकारः सर्वादेशार्थः । तेन सर्वस्य जसः शसश्च इर्भवति नत्वंतस्य । तमेवाह गुरुः शिच्चेति। शकार इत् यस्य स शिदादेशः[ गुरुः शिच्च सर्वस्य वक्तव्यः ] गुरुः आदेशः च पुनः शित् शकारेत् आदेशः सर्वस्यैव भवति । गुरुर्नैकाक्षरः ( त्रेरयङ् ) इत्यादिकः । तथा शित् शकारेच्च य आदेशः स सर्वस्य आदेशिनः स्थाने भवति नत्वंतस्य । अनेन ( जस्शसोः शिः ) इति शिआदेशः सर्वस्य जसः स्थाने भवति ।

**( नुमयमः ) नपुंसकलिंगस्य नुमागमो भवति शौ परे । यमप्रत्याहारांतस्य न भवति । ( मिदंत्यात्स्वरात्परो वक्तव्यः ) उकार उच्चारणार्थः । मकारः स्थाननियमार्थः ( नोपधायाः ) नांतस्योपधाया दीर्घो भवति शौ परे धिवर्जितेषु । पंचसु परेषु नामि च । कुलानि । २ । कुलेन । शेषं पुँल्लिंगवत् । एवं मूलफलपत्रपुष्पकुंडकुटुंबादयः ॥**

सूत्रं ( नुमयमः ) । नुम् । १–१ ( हसे० ) न यम् अयम् तस्य अयमः । ६–१ स्वर० ( स्त्रो० ) द्विपदं । नपुंसकस्य नुमागमो भवति शौ परे यमप्रत्याहारो अंते यस्य शब्दस्य तस्य नुमागमो न भवति । यथा अहानि चत्वारि इत्यादौ । मित् मकारेत् प्रत्ययः आगमश्च अंत्यात्स्वरात्परो वक्तव्यः। उकार उच्चारणार्थः। अनेन नुमागमः । न्। सूत्रं ( नोपधायाः ) नस्योपधा नोपधा तस्या नोपधायाः ६–१ (ङितां यट् । सवर्णे०। स्त्रो० ) नांतस्य शब्दस्य उपधायाः अंत्यात्पूर्व उपधा इति संज्ञासंधिकथितलक्षणाया दीर्घो भवति नपुंसके शौ परे पुँल्लिंगे धिवर्जितेषु पंचसु वचनेषु नामि च नुट्सहिते आमि परे च । यथा पंचानां । अनेन उपधाया दीर्घः । कुलानि । धौ (समानाद्धेर्लोपोऽधातोः ) हे कुल । द्विवचने ( ईमौ । अ इ ए ) हे कुले । बहुवचने । ( जस्शसोः शिः ।

---

१ ( नोपधायाः ) इत्यत्र छंदसि तु भवंतीति नियमात्संधिः । छंदोवत्सूत्राणि भवंतीति वचनात् । इति पाठः पश्चात् ततः कुलानि । इति । २ देववत्–द्वि० पा० ।

नुमयमः । नोपधायाः ) हे कुलानि । शेषं देवशब्दवत् । एवं कुलशब्दवत् मूलफलजलपत्रपुष्पकुंडकुटुंबज्ञानधनवनरत्नादयः शब्दाः साध्याः ।

**सर्वादीनां यकारांतानामन्यादिपंचशब्दव्यतिरिक्तानां प्रथमाद्वितीययोः कुलशब्दवत्प्रक्रिया । सर्वं सर्वे सर्वाणि । २ । शेषं तु पूर्ववद्रूपं । तत्रापि अन्यादेर्विशेषमाह । ( इत्वन्यादेः ) अन्यादेर्गणात्परयोः स्यमोः इतुर्भवति ॥**

सर्वादयोपि नपुंसकलिंगे प्रथमायां द्वितीयायां च कुलशब्दवत् । सर्वं । सर्वे । सर्वाणि । पुनरपि । सर्वं सर्वे सर्वाणि । तृतीयादौ तु पुंल्लिंगवत् । परे अन्यादीनां प्रथमाद्वितीयैकवचने विशेषमाह । सूत्रं ( इत्वन्यादेः ) इतु १-१ । सांके० । अन्य आदिर्यस्यासौ अन्यादिस्तस्मात् । ५-१ । ( ङिति । ङस्य ) इत्यकारलोपः ( स्रो० । डवं ) स्वर० द्विपदं । अन्यादे० । अन्य । अन्यतर । इतर । कतर । कतम । इत्यन्यादेर्गणान्नपुंसकलिंगे वर्तमानात्परयोः स्यमोः इतु इत्यादेशो भवति ॥

**इकारः सर्वादेशार्थः । उकार उच्चारणार्थः ( वावसाने ) अवसाने वर्तमानानां झसानां जबा भवंति चपा वा इति पक्षे दत्वमपि भवति । अन्यत् अन्यद् । अन्ये । अन्यानि । पुनस्तथैव च । अन्यतरत् अन्यतरद् । अन्यतरे । अन्यतराणि । इतरत् । कतरत् । कतमत् । शब्दाः । शेषं सर्ववत् । एते चान्यादयः ।**

इकारः सर्वादेशार्थः ( गुरुः शिच्च सर्वस्य वक्तव्यः ) इति न्यायात् । उकार उच्चारणार्थः । अनेन सेः स्थाने अम्स्थाने च त् इत्यादेशः । द्वित्वबहुत्वयोः कुलशब्दवत् । हे अन्यत् । तृतीयादौ सर्वादिवत् । एवं अन्यतरत् । इतरत् । कतरत् । कतमत् । एतेऽपि शब्दाः साध्याः । ( जरायाः जरस् वा ) इति वा जरस् । नास्ति जरा यस्य तत् । अजरसं अजरं । अजरसी अजरे । अजरांसि अजराणि । शेषं पुंवत् । अत्र यद्यपि क्रमेण पूर्वं आकारांतः सोमपाशब्दः । तदग्रे इकारांता अस्थिदधिसक्थिअक्षिवारिशब्दास्तद्वदेव तदग्रे ईकारांता ग्रामण्यादयस्तद्वदेव उकारांता मध्वादयस्तदग्रे ऊकारान्ता यवल्वादयस्तदग्रे ऋकारांताः कर्तृप्रमुखास्तदग्रे ऐकारांतो अतिरैशब्दः तदग्रे ओकारांत उपगोशब्दः तदग्रे औकारांतः अतिनौशब्दः । इति क्रमो युज्यते । परमत्र केषुचित्पुस्तकेषु क्रमवैपरीत्येन लिखितानि संति ॥

---

१ प्रथमादयः कुलवत् । प्रथमं प्रथमे प्रथमानि । अकारांतो नपुंसकलिंगः सोमपाशब्दः । सोमपा सि इति स्थिते ( नपुंसकस्य ) नपुंसकस्य ह्रस्वो भवति सर्वासु विभक्तिषु परतः । ( अतोम् ) सोमपं । सोमपे । सोमपानि । हे सोमप । शेषं कुलवत् । इति पाठः ।

इकारांतोऽस्थिशब्दः ( नपुंसकात्स्यमोर्लुक् ) नपुंसकलिंगात्परयोः स्यमोर्लुग्भवति । अस्थि ( य्वृर्णां धौ गुणो वा ) इश्च उश्च ऋश्च य्वृरस्तेषां इ उ ऋ इत्येतेषां नपुंसके धौ वा गुणो भवति । हे अस्थे हे अस्थि । हे अस्थिनी । हे अस्थीनि । उक्तं हि । "संबोधने तूशनसस्त्रिरूपं सांतं तथा नांतमथाप्यदंतं । माध्यंदिनिर्वष्टि गुणं त्विगंते नपुंसके व्याघ्रपदां वरिष्ठः ॥" इति ( नामिनः स्वरे ) नाम्यन्तस्य नपुंसकलिङ्गस्य नुमागमो भवति विभक्तिस्वरे परे ( ईमौ ) अस्थिनी अस्थीनि । अस्थि । अस्थिनी। अस्थीनि( अच्चास्थ्नां टादौ ) अस्थ्यादीनां नुमागमो भवति इकारस्य चाकारो भवति टादौ स्वरे परे ॥ ( अल्लोपः स्वरेऽम्वयुक्ताच्छसादौ ) नांतस्योपधाया अकारस्य लोपो भवति शसादौ स्वरे परे मकारवकारांतसंयोगादुत्तरस्य न भवति । अस्थ्ना । अस्थिभ्यां । अस्थिभिः । अस्थ्ने । अस्थिभ्यां । अस्थिभ्यः । अस्थ्नः । अस्थिभ्यां । अस्थिभ्यः । अस्थ्नः । अस्थ्नोः । अस्थ्नां ( वेङ्योः ) नांतस्य नाम्नः ईङ्योः परयोर्वा अकारस्य लोपो भवति । अस्थ्नि अस्थनि । अस्थ्नोः । अस्थिषु । एवं दधिसक्थिअक्षिशब्दाः । वारि । वारिणी । वारीणि ॥

इकारांतो नपुंसकलिंगः अस्थिशब्दः । स्यमोर्विषये । सूत्रं । नपुंसक ५-१ ( ङ-

---

१ य्वृ-इति पाठोऽस्ति परंतु-तेषामिति वहुवचनानुसारेण सोऽशुद्ध एव-य्वरः इति य्वृ इत्यस्य वहुवचनं समीचीनमस्ति । यद्वा य्वृ इति अनुकरणं वोद्धव्यम् । २ अत्राहि भट्टवासुदेवकृतप्रसादटीकासमन्विते पुस्तके " अच्चास्थ्नाम् " इति सूत्रं पठित्वा ' शसादौ अस्थ्यादीनां नुमागमो भवति इकारस्य चाकारो भवति शसादौ स्वरे परे ' इति वृत्तिः कृता दृश्यते । प्रसादटीकायां च तद्व्याख्यावसरे ' शस्आदिर्येषामित्यतद्गुणसंविज्ञानवहुव्रीह्याश्रयणात् शसं विहाय टादावित्यर्थः । तदुपादानं च"वसोर्व उः इत्यादावनुवृत्त्यर्थम् " इत्याद्युक्तम् । अत्र च स्पष्टतयैव " टादौ " इत्युक्तं । तथाच " शसादौ " अथवा " टादौ " इत्युभयोर्मध्येऽन्यतरपाठेऽपि तृतीयैकवचनादीनामेव वोधान्न कश्चिद्दोषलेशावकाश इति सुधियो विदांकुर्वन्तु ।

सिरत् । सवर्णे० ) सिश्च अम् च स्यमौ तयोः स्यमोः । ६–२ । स्वर० ( स्त्रो० । ) लुक् । १–१ । ( हसेपः० नामिनो रः । ) त्रिपदं । अवर्णांतवर्जान्नपुंसकलिंगात्परयोः स्यमोर्लुक् भवति । अनेन स्यमोर्लुक् । धौ विशेषणमाह । सूत्रं ( य्वृणां ) इश्च उश्च ऋश्च य्वरः तेषां य्वृणां इकार उकार ऋकाराणां स्थाने नपुंसकलिंगविषये धौ वा गुणो वक्तव्यः । ( नपुंसकात् स्यमोर्लुक् ) इति धिलोपे विहिते इकारस्य एकारो गुणः हेशब्दस्य प्राक्प्रयोगः । अत्र शिष्टसंमतिमाह । उक्तं च वृद्धैः । संबोधने० इति । तु इत्यवधारणे माध्यंदिनिराचार्यः उशनसः उशनस्शब्दस्य संबोधने आमंत्रणे सिविषये त्रिरूपं रूपत्रयं वष्टि अभिलषति वाञ्छति वा कथयति । किं तत् त्रिरूपं सांतं सकारांतं यथा उशनस् ( हसेपः० स्त्रो० ) हे उशनः । तथा नांतं नकारांतं उशनन् । तथा अदंतं अकारांतं हे उशन इति । तु पुनः । इगंते इकारोकारऋकारांते नपुंसके धिविषये विकल्पेन गुणं वष्टि कथयति । यतः प्रक्रियाकौमुद्यां इउण् ऋऌक् एते इक्संज्ञाः। यथा हे अस्थे हे अस्थि । हे वारे हे वारि । हे मधो हे मधु । हे कर्त्तः हे कर्तृ । कथंभूतो माध्यंदिनिः । व्याघ्रपदां व्याघ्रपदगोत्रीयविप्राणां मध्ये वरिष्ठो गरिष्ठः श्रेष्ठः । १–२ । २–२ ( ईमौ ) इति औस्थाने ई । सूत्रं । नामिनः । ६–१ । स्वर० ( स्त्रो० । ) स्वर० । ७–१ ( अइए ) द्विपदम् । नाम्यंतस्य नपुंसकलिंगस्य नुमागमो भवति स्वरे परे । अत्र विभक्तिसंबंध्येव स्वरो ग्राह्यः । तेन दधि आनयेत्यत्र न नुम् । अनेन नुमागमः । ( स्वर० ) । बहुत्वे कुलवत् । ( जस्शसोः शिः । नुमयमः । नोप० । ) दीर्घत्वे इकारस्य ईकारः । तृतीयादौ हसादौ अविशेषः । स्वरादौ । सूत्रं ( अच्चास्थ्नां टादौ ) अत् । १–१ । ( हसे० ) । च १–१ । अव्य० ( स्तोः श्चु० ) स्वर० । अस्थि । ६–३ । ( अच्चास्थ्नां० ) इति नुमागमः इकारस्य अकारः । ( अल्लोपः स्वरे० ) स्वर० । मध्ये ( सवर्णे० ) त्रिपदं । टा आदिर्यस्यासौ टादिः तस्मिन् । ७–१ ( ङेरौ ङित् ) टिलोपः। स्वर० । कचित्तु ' शसादौ ' इति पाठः । तत्र शस् आदिर्यस्य स शसादिः शसोऽग्रतः अर्थात् टादिः । यद्वा गौणत्वे प्रियास्थ्नः शुनकान् , प्रियदध्नश्च पुरुषान् इत्यादिप्रयोगसिद्ध्यर्थं शसोऽपि ग्रहणं युक्तं । अस्थ्यादीनां अस्थि दधि सक्थि अक्षिशब्दानां टादौ स्वरे परे नुमागमो भवति इकारस्य च अकारः । अनेन स्वरादौ सर्वत्र नुम् इकारस्य च अकारः । ( नामिनः स्वरे । ) इत्यनेन एव चेन्नुम् क्रियते तदा इकाराभावे जाते निमित्ताभावे नैमित्तिकस्याप्यभावः इति नुम्लोपः स्यादतः (अच्चास्थ्नां ) इति नुम्करणं पुनरुक्तये न । सूत्रं । ( अल्लोपः स्वरे० ) अतः अकारस्य लोपः अल्लोपः १–१ ( स्त्रो० । ) स्वर० ७–१ ( अइए ) अम्वयुक्तः म् च वश्च म्वौ ताभ्यां युक्तः संयोगः म्वयुक्तः न म्वयुक्तः अम्वयुक्तः तस्मात् ५–१ ( ङसिरत् । सवर्णे० । ) पश्चात् ( एदोतोतः ) शस् आदिर्यस्य स शसादिः तस्मिन् । ७–१ । ( ङेरौ ङित् ) । टिलोपः । ( चपाच्छः शः ) सूत्रं सिद्धं चतुःपदं । अत्र तु टादौ स्वरे परे ए-

व अकारस्य लोपो भवति। शसग्रहणं तु प्रियास्थ्नः शुनकान् पश्य, तथा राज्ञः इत्यादिप्रयोगासिद्ध्यर्थं नांतस्य नकारांतस्योपधायाः उपधाभूतस्य अकारस्य लोपो भवति शसादौ स्वरे मकारवकारसंयोगादुत्तरस्याकारस्य लोपो न भवति। यथा आत्मनः। आत्मना। यथा च यज्वनः यज्वना। अनेन स्वरादौ अकारस्य लोपः। स्वर०। अस्थ्ना। अस्थिभ्यां। अस्थिभिः। अस्थ्ने। ङौ अल्लोपविशेषमाह। (वेङ्योः) वा ३–१ (अव्यया०)। ईश्च ङिश्च ईङी तयोः ७–२ (इ यं स्वरे) स्वर० (स्रो०) पश्चात् (अइए) द्विपदं सूत्रं। नांतस्य नकारांतस्य शब्दस्य ईति औस्थाने जाते ईकारे परे ङौ च सप्तम्येकवचने परे च वा अकारस्य लोपो भवति। ईकारे परे तु। अह्नी अहनी। इत्यादौ ज्ञेयं। ङौ परे अनेन वा अल्लोपः। अस्थ्नि अस्थनि। एवं दधि सक्थि अक्षिशब्दाः। दधि। दधिनी। दधीनि॥ १॥ पुनरपि दधि दधिनी दधीनि॥ २॥ दध्ना। दधिभ्यां। दधिभिः। ३। दध्नि दधनि। एवं सक्थिशब्दः ऊरुवाची। सक्थि। सक्थिनी। सक्थीनि। अक्षिशब्दो नेत्रवाची। अक्षि। अक्षिणी। अक्षीणि। २। अक्ष्णा। अक्षिभ्यां। अक्षिभिः। इत्यादि॥

(नपुंसकस्य ह्रस्वः) नपुंसकस्य ह्रस्वो भवति। (नपुंसकात्स्यमोर्लुक्) ग्रामणि कुलं। स्वरादौ (नामिनः स्वरे) इति नुमागमः। (ईमौ) ग्रामणिनी। ग्रामणीनि। (नामिनः स्वरे) हे ग्रामणे हे ग्रामणि (टादावुक्तपुंस्कं पुंवद्वा) उक्तः पुमाननेनेत्युक्तपुंस्कं पुंवन्नाम्यंतं नपुंसकं टादौ स्वरे परे पुंवद्वा भवति॥ "एक एव हि यः शब्दास्त्रिषु लिंगेषु जायते। एकमेवार्थमाख्याति उक्तपुंस्कं तदुच्यते॥ १॥" ततः। ग्रामण्या ग्रामणिना। ग्रामणिभ्यां। ग्रामणिभिः। ग्रामण्ये ग्रामणिने। ग्रामणिभ्यां। ग्रामणिभ्यः। ग्रामण्यः ग्रामणिनः। ग्रामणिभ्यां। ग्रामणिभ्यः। ग्रामण्यः ग्रामणिनः। ग्रामण्योः ग्रामणिनोः॥ [नुमंतस्यामि दीर्घः] ग्रामणीनां। ग्रामण्यां ग्रामणिनि। ग्रामण्योः ग्रामणिनोः। ग्रामणिषु। सोमपं। कुलं। सोमपे। सोमपानि। पुनरपि। सोमपं। सोमपे। सोमपानि। सोमपेन। सोमपाभ्यां। सोमपैः। इत्यादि पूर्ववत्॥

---

१ 'अल्लोपः स्वरे' इति सूत्रप्राप्तनित्याकारलोपे विकल्पविशेषमाहेत्यर्थः।

ईकारांतो ग्रामणीशब्दः । सूत्रं । ( नपुंसकस्य ) नपुंसक । ६–१ । ( ङस्य ) ह्रस्व १–१ ( स्वो० ) नपुंसकलिंगे वर्त्तमानस्य दीर्घस्वरांतस्य शब्दस्य सर्वविभक्तिषु ह्रस्वो भवति । ग्रामणी । १–१ । २–१ । अनेन सर्वत्र ह्रस्वः ईइत्यस्य इ ( नपुंसकात्स्यमोर्लुक् । ) १–२ । २–२ । ह्रस्वः ( ईमौ । नामिनः स्वरे । ) स्वर० । १–३ । २–३ । ह्रस्वः ( नामिनां स्वरेनोपधायाः ) तृतीयादौ ह्रस्वत्वे कृते हसादौ अविशेषः स्वरादौ तु विशेषः । श्लोकः । एक० । यः कश्चित् एक एव शब्दः आप्प्रत्ययादिरहितः सन् त्रिषु लिंगेषु पुंस्त्रीनपुंसकेषु वर्त्तते एकमेव अर्थं आख्याति वक्ति एकार्थवाचक एव भवति तद्भाषितपुंस्कं उक्तपुंस्कमुच्यते । ततः किं कर्त्तव्यमित्याह । ( टादावुक्तपुंस्कं पुंवद्वा ) टादौ ७–१ ( ङेरौ ङित ) उक्तपुंस्कं । १–१ । पुंवत् । १–१ । वा । ३–१ ( अव्यया० ) उक्तः पुमान् पुँल्लिंगो येन तदुक्तपुंस्कं अर्थरूपाभ्यां तुल्याकारो यः शब्दः पुंसि नपुंसके च वर्त्तमानः स उक्तपुंस्कः । तथावस्थितं निर्दिष्टपुँल्लिंगं एवंभूतं नाम्यंतं नपुंसकं टादौ स्वरादौ विभक्तौ परतः पुंवद्वा भवति । नपुंसकलिंगेपि वा पुंलिंगवत् स्यात् । विकल्पेन पुँल्लिंगवद्रूपाणि स्युः । अनेन तृतीयादौ स्वरादौ वा ह्रस्वः । पक्षे पुँल्लिंगवत्त्वात् ह्रस्वाभावे सेनानीशब्दवत् ( य्वौ वा ) इति यकारः । ह्रस्वत्वे ( नामिनः स्वरे । ) इति नुमागमः । ग्रामण्या ग्रामणिना । ग्रामणिभ्यां । ग्रामणिभिः । ग्रामण्ये ग्रामणिने । ग्रामणिभ्यां । ग्रामणिभ्यः । ग्रामण्यः । पुंवद्भावो न ( य्वौ वा ) ग्रामणिनः । आमि कृते ( नामिनः स्वरे ) विकल्पे पुँल्लिंगवद् रूपाणि स्युः । आमि पुंवद्भावे एकस्मिन्पक्षे ( य्वौ वा ) ग्रामण्यां । द्वितीयपक्षे ( सेनान्यादीनां वामो नुट्० ) इति नुटि कृते ( नामि ) इति दीर्घत्वम् । ग्रामणीनां । नपुंसकपक्षे ( नामिनः स्वरे ) इति नुमि कृते ( नुडामः ) इति सूत्रेण नुटो अभावे कृते ( नामि ) इति दीर्घत्वं न संभवति तेन नुमंतस्यामि दीर्घः । पक्षद्वयेऽपि ग्रामणीनां इत्येव रूपसिद्धिः । परं ( नुडामः ) इति नुटो नित्यत्वात् ( नामिनः स्वरे ) इति न भवति । ततो नुमंतस्यामि दीर्घ इत्यपि व्यर्थमेव पुनश्चिंत्यं । उक्तं च हैमव्याकरणे । ( अनाम्स्वरे नोंऽतस्य ) नाम्यंतस्य नपुंसकस्य संबंधिनि आम्वर्ज्जिते स्यादौ स्वरे परे नोंतो भवति । अनामीति किं । वारीणां कर्तॄणां त्रपूणाम् एषु नुमागमाभावे नामि सति ( दीर्घो नाम्यतिसृचतसृ ) इत्यादिना दीर्घः सिद्धः । ग्रामण्यां ( आम्ङेः । य्वौ वा ) ग्रामणिनि । ग्रामण्योः ग्रामणिनोः । ग्रामणिषु । एवं सुश्रि कुलं । तेन सुश्रिणा सुश्रिया । सुश्रिणे सुश्रिये । एवं पटुने पटवे । इत्यादि । एवं सेनानिसुधियखलुखलपुप्रमुखाः । आकारांतः सोमपाशब्दस्तस्य ( नपुंसकस्य ) इति सूत्रेण ह्रस्वे कृते । प्रथमाद्वितीययोः कुलशब्दवत् । १–१ ( अतोम् ) सोमपं । १–२ सोमपे ( ईमौ ) १–३ ( जस्शसोः शिः । नुमयमः । नोपधायाः ) सोमपानि । पुनरपि द्वितीयायां । सोमपं । सोमपे । सोमपानि । टादौ ( नपुंसकस्य ) इति ह्रस्वे कृते ( टेन । अइए ) सोमपेन ।

सोमपाभ्यां (आद्वि) सोमपैः (द्धचः) सोमपाय । सोमपाभ्यां । सोमपेभ्यः । सोमपात् । सोमपाभ्यां । सोमपेभ्यः । सोमपस्य । सोमपयोः । सोमपानाम् । सोमपे । सोमपयोः । सोमपेषु । संबोधने ( नपुंसकस्य ) इति ह्रस्वे कृते कुलशब्दवत् साधना । ( समानाद्धेर्लोपोऽधातोः ) सोमपाशब्दस्य उक्तपुंस्कत्वेपि नाम्यन्तत्वाऽभावात् तृतीयादौ स्वरादौ वा पुंवत् रूपाणि न भवंति । इकारांतो वारिशब्दः । प्रथमाद्वितीययोः अस्थिशब्दवत् । वारि वारिणी वारीणि । २ । तृतीयादौ ( नामिनः स्वरे ) इति नुमागमः ( ष्रुन्नों० ) स्वर० वारिणा । वारिभ्यां । वारिभिः । ३ । वारिणे । वारिभ्यां । वारिभ्यः । ४ । वारिणः । वारिभ्यां । वारिभ्यः । ५ । वारिणः । वारिणोः । आमि ( नुडामः ) इति नुट् । ( नामि ) इति दीर्घः । वारीणां । ६ । वारिणि । वारिणोः । वारीषु । संबोधने ( य्वृणां नपुंसके धौ वा गुणः ) हे वारि हे वारे । इत्यादि शेषं सुगमं । ऐकरांतः सुरैशब्दः अतिरैशब्दश्च ( नपुंसकस्य ) इति ह्रस्वे कृते वारिशब्दवत् । [ ह्रस्वादेशे संध्यक्षराणामिकारोकारौ च वक्तव्यौ । ] सुष्ठु रा धनं यस्य तत् सुरि । सुरि । सुरिणी । सुरीणि । २ । सुरिणा सुराया । सुरिभ्यां । सुरिभिः । इत्यादि । एवं सुष्ठु नौर्यस्य तत् सुनु । सुनुनी । सुनूनि । २ । सुनुना सुनावा । सुनुने सुनावे । इत्यादि ।

**उकारांतो मधुशब्दः । मधु । मधुनी । मधूनि । २ । मधुना । इत्यादि । तस्यापि स्वरे नुमागमः ॥**

उकारांतो मधुशब्दः स च चैत्रमासवाची वसंतवाची मधुदैत्यवाची वा पुँल्लिंगे भवति । क्षौद्रमद्यमकरंदवाची तु नपुंसकलिंगे भवति । अत एवार्थभेदत्वादुक्तपुंस्कं न किंतु तस्य वारिशब्दवत् साधना “ पीलुर्वृक्षः फलं पीलु पीलुने न तु पीलवे । वृक्षे निमित्तं पीलुत्वं तज्जत्वं तत्फले पुनः ॥ ” एवं उकारांतो वस्तुशब्दः । वस्तु । वस्तुनी । वस्तूनि । २ । एवं वास्तु वास्तुनी वास्तूनि । २ । अंबु । अंबुनी । अंबूनि । २ । सानु । सानुनी । सानूनि । २ । जानु । जानुनी । जानूनि । २ । ऊकारांतः खलपूशब्दः ( नपुंसकस्य ) इति ह्रस्वः । खलपु । खलपुनी । खलपूनि । २ । इत्यादि मधुशब्दवत् ॥

**ऋकारांतः कर्तृशब्दः ॥ ( नपुंसकात्स्यमोर्लुक् ) कर्तृ ॥ ( ईमौ० ष्रुन्नों० ) कर्तृणी ॥ कर्तॄणि । २ । कर्तृणा ( ऋ रं ) कर्त्रा । कर्तृभ्यां । कर्तृभिः । कर्तृणे कर्त्रे । कर्तृभ्यां । कर्तृभ्यः । ( ऋतो ङ उः ) स च डित् । ( डिति टेः ) कर्तुः कर्तृणः । कर्तृभ्यां । कर्तृभ्यः । कर्तुः कर्तृणः । कर्त्रोः कर्तृणोः । कर्तॄणां । कर्तरि कर्तृणि । कर्त्रोः कर्तृणोः । कर्तृषु । हे कर्तः हे कर्तृ । हे कर्तृणी ।**

हे कर्तृणि । ऐकारांतः अतिरैशब्दः ॥ रायमतिक्रांतं कुलमिति विग्रहे ॥ ( संध्यक्षराणामिदुतौ ह्रस्वादेशः । ) इति ह्रस्वत्वं च । अतिरि । अतिरिणी ॥ अतिरीणि । २ । शेषं वारिशब्दवत् ॥ ओकारांतो नपुंसकलिंग उपगोशब्दः । उपगता गावो यस्य तत् उपगु । उपगुनी । उपगूनि ॥ शेषं मधुशब्दवत् ॥ औकारांतो अतिनौशब्दः । नावमतिक्रांतं यज्जलं तत् । अतिनु । अतिनुनी । अतिनूनि । २ । शेषं पूर्ववत् ॥ इति स्वरांताः नपुंसकलिंगाः ॥ इति स्वरांताः समाप्ताः ॥

कर्तृशब्दस्य प्रथमाद्वितीययोः अस्थिशब्दवत् साधना । कर्तृ । कर्तृणी । कर्तृणि । २ । तृतीयादौ स्वरादौ उक्तपुंस्कत्वात् रूपद्वयं । तत्र एकत्र पुंवत् तत्र ( ऋ रम् ) अन्यत्र (नामिनः स्वरे ) इति नुमागमः । कर्त्रा कर्तृणा । ३–१ । कर्त्रे कर्तृणे । ४–१ । कर्तुः कर्तृणः । ५–१ । कर्तुः कर्तृणः । ६–१ । आमि (नुडामः ) इति नुट् ( नामि ) इति दीर्घः । कर्तृणां । कर्तरि कर्तृणि । ७–१ । धौ वा गुणो अर् । हे कर्तः हे कर्तृ । शेषं कर्त्र्यं । ऐकारांतोऽतिरैशब्दः । (नपुंसकस्य ) इति ह्रस्वे कृते इकारे वारिशब्दवत् । ओकारांत उपगोशब्दः उपगोर्ह्रस्वत्वे उपगु । उपगुनी । उपगूनि । २ । पुँल्लिंगपक्षे उपगवा इत्यादि । औकारांतो अतिनौशब्दः अतिनु । अतिनुनी । अतिनूनि । २ । इत्यादि स्वयमूह्यम् । इति स्वरांतनपुंसकलिंगसाधनम् ॥

अथ हसांताः पुँल्लिंगाः प्रदर्श्यन्ते । तत्र हकारांतो अनडुह्शब्दः । नामसंज्ञायां स्यादयः [ पंचस्वनडुह आमागमो वक्तव्यः ] ( सावनडुहः । ) अनडुह्शब्दस्य सौ परे नुमागमो भवति । ( संयोगांतस्य लोपः ) संयोगांतस्य रसे पदांते च लोपो भवति (१) । ( हसेपः सेर्लोपः । उ वं ) इति वत्वं । लोपविधिसामर्थ्यान्न दत्वं । अनड्वान् अनड्वाहौ अनड्वाहः । ( धावम् ) अनडुह्शब्दस्य धौ परे अमागमो भवति । हे अनड्वन् ।

---

( १ ) अत्रहि ' रेफादुत्तरस्य सकारस्यैव लोपो नान्यस्य ' इति कस्मिंश्चित्पुस्तकेऽधिकः पाठो दृश्यते । स च " रात्सस्य " इति पाणिनीयसूत्रार्थविवरणरूपः युज्यते । परंतु अत्र मूलेऽस्य पाठस्य मूलादर्शनान्मूले न प्रक्षिप्त इत्यवधेयम् ।

**हे अनड्वाहौ । हे अनड्वाहः । अनड्वाहं । अनड्वाहौ । अनडुहः । अनडुहा । (वसां रसे) वसु स्रंस् ध्वंस् भ्रंस अनडुह् इत्येतेषां दो भवति रसे पदांते च । अनडुद्भ्यां । अनडुद्भिः । अनडुहे । अनडुद्भ्यां । अनडुद्भ्यः । अनडुहः । अनडुद्भ्यां । अनडुद्भ्यः । अनडुहः । अनडुहोः । अनडुहां । अनडुहि । अनडुहोः । ( खसे चपा झसानां ) अनडुत्सु ॥**

अथ हसांतपुँल्लिंगसाधनं किंचिदुच्यते । तत्र प्रथमं हांतान् दर्शयति । अत्र हकारांतो अनडुह्शब्दः । तस्य नामसंज्ञायां सत्यां स्यादयो विभक्तयो दीयंते । ततः ( पंचस्वनडुह आमागमो वक्तव्यः ) अनडुह्शब्दस्य स्यादिषु पंचसु वचनेषु परेषु शौ च आम् आगमो भवति । केचित्तु (अनडुहश्च) इति सूत्रेण ( चतुरनडुहोराम्शौ च ) इति च सूत्रेण आमागममिच्छंति, स्त्रीलिंगे च विकल्पेनामागममिच्छंति । अनड्वाही । अनडुही । इति । अनेन पंचसु आम् ( मिदंत्यात्स्वरात्परो वक्तव्यः ) इति डु अग्रे आ ( उ वं ) स्वर० । अनड्वह् सि इति स्थिते सूत्रं ( सावनडुहः) सि । ७–१ । (ङेरौ डित् ) टिलोपः । स्वर० । अनडुहः । ६–१ स्वर० । ( स्रो० ) पश्चात् ( औ आव् । ) सिद्धं । वृत्तिः कंड्या । अनेन सौ परे नुमागमः । हस्य पूर्वम् ( हसेपः० ) सूत्रं संयोगांतस्य लोपः संयोगस्य अंतः संयोगांतस्तस्य संयोगांतस्य । ६–१ ( ङस्य ) लोपः १–१ ( स्रो०) संयोगाक्षरस्य यो अंतः संयुक्तानामक्षराणां वा यो अंत्यो वर्णस्तस्य लोपो भवति रसे पदांते चकाराद्रकारात् अग्रे संयोगांतस्य लोपो न भवति । यथा ऊर्क् ऊर्ग् । ऊर्ज्जौ । ऊर्ज्जः । अनेन सौ परे हकारस्य लोपः । अनड्वान् इति सिद्धं । अत्र नुम्विधानसामर्थ्यादेव ( वसां रसे ) इति दत्वं न भवति । यद्वा कृतेपि दकारे संयोगांतस्य लोपान्न रूपभेदः । अनः शकटं वहतीति अनड्वान् । वृषभः । ( वहेः क्विबनसो डश्च ) इति (यजां यवराणां) इति संप्रसारणं वस्य उः । स्वरादौ स्वर० । धौ तु । सूत्रं ( धावम् ।) धि ७–१ ( ङेरौ डित् ) टिलोपः । स्वरहीनं० । अम् १–१ ( हसे० )पश्चात् ( औ आव् ) स्वर० । अनडुह्शब्दस्य धौ परे अमागमो भवति । आमोऽपवादः । अनेन अम् [ मिदंत्या० । ] (सावनडुहः । ) इति नुम् (हसे० । संयोगांतस्य लोपः ) द्वित्वबहुत्वयोरामागमः ( उ वं ) स्वर० । द्वितीयादौ स्वरादौ स्वर० हसादौ । सूत्रं (वसां रसे० ) वस् । ६–३ । स्वर० (मोनु० । ) रस ७–१ ( अइ ए ) सिद्धं । वसामिति बहुवचननिर्देशात् वसादयः वस् इति क्वस् प्रत्ययस्य वस् ( विदेर्वा वस् ) इत्यपि वस् । स्रंस ध्वंस अधःपतने । अनडुह्शब्दो गोवृषभवाची एतेषां रसे पदांते च दत्वं

भवति । [ षष्ठीनिर्दिष्टस्यादेशोऽन्तस्य भवति ] अनेन हस्य दः । भकारादौ स्वर० सुपि ( खसे चपा० । दस्य तः स्वर० । अनडुत्सु । सिद्धो अनडुह्शब्दः । स्रंसुध्वंसोस्तु सकारांतावसरे । उषास्रत् । उषास्रसौ । उषास्रसः । उषास्रद्भ्यां । एवं पर्णध्वत् । पर्णध्वसौ ॥

गोदुह्शब्दस्य भेदः ( दादेर्घः ) दादेर्धातोर्हकारस्य घत्वं भवति धातोर्झसे परे नाम्नश्च रसे पदांते च । गोदुह् सि इति स्थिते । ( आदिजबानां झभांतस्य झभाः स्ध्वोः ) धातोर्झभांतस्यादौ वर्तमानानां जबानां झभा भवंति सकारे ध्वशब्दे च परे नाम्नश्च रसे पदांते च ( वावसाने ) अवसाने वर्तमानानां झसानां जबा भवंति चपा वा । गोधुग् गोधुक् । गोदुहौ । गोदुहः । हे गोधुक् हे गोधुग् । हे गोदुहौ । हे गोदुहः । गोदुहं । गोदुहौ । गोदुहः । गोदुहा । भकारादौ ( दादेर्घः ) इति घत्वे आदिजबस्य दकारस्य झभे धकारे च कृते ( झबे जबाः ) गोधुग्भ्यां गोधुग्भिः । गोदुहे । गोधुग्भ्यां । गोधुग्भ्यः । गोदुहः । गोधुग्भ्यां । गोधुग्भ्यः । गोदुहः । गोदुहोः । गोदुहां । गोदुहि । गोदुहोः । गोधुक् सु इति स्थिते । ( खसे चपा झसानां ) इति कत्वं । ( क्रिलात्षः सः कृतस्य ) इति षत्वं । कषसंयोगे क्षः । गोधुक्षु ॥

हकारांतत्वेपि अनडुह्शब्दापेक्षया गोदुह्शब्दस्य भेदः कश्चिद्विशेषोऽस्ति । गां दोग्धीति गोधुक् । दुह् प्रपूरणे । गोपूर्वः क्विप्प्रत्ययांतः । सूत्रं । दो दकारः आदिर्यस्य स दादिस्तस्य दादेः । ६–१ ( ङिति । ङस्य । स्त्रो० ) घ १–१ ( स्त्रो० । नामि० ) जल० । सिद्धं द्विपदं । दादेरिति दकारादेर्धातोर्हकारस्य घत्वं भवति आख्याते झसे परे नाम्नस्तद्धिकारस्य रसे परे अथवा पदांतविषये । अनेन भकारादौ सुपि च हस्य घः । सूत्रं ( आदिज० ) आदौ वर्तमाना जबा आदिजबास्तेषां । ६–३ ( नुडामः । नामिनः० ) स्वर० ( मोनु० । झभा अंते यस्य स झभांतस्तस्य । ६–१ ( ङस्य ) झभाः । १–३ ( सवर्णे०स्त्रो० ) स् च ध्व च स्ध्वौ तयोः स्ध्वोः । ७–२ स्वर० ( स्त्रो० ) चतुःपदमिदं सूत्रं । झभांतस्य धातोः आदौ वर्तमानानां जबानां झभा भवंति । जडदगबानां क्रमेण झढधघभा भवंति सकारे ध्वे च परे आख्याते आत्मनेपदे से ध्वे ध्वसंबंधिनि सकारे ध्वशब्दे च परे नाम्नश्च रसे पदांते च । केचित्तु जभतीति जप् जभौ जभः । इत्यादौ प्रयोगे जकारस्य झकाराऽसंभवात् 'आदिजबानां ढभांतस्य ढभाः स्ध्वौ' इत्येवं सु-

त्रं पठांति । अनेन यत्र रसप्रत्याहारस्तत्र हस्य दः । सूत्रं (वावसाने) वा ३-१ । (अव्य०) । अवसाने । ७-१ (अइए । सवर्णे०) सिद्धं द्विपदं (विरामोऽवसानं) अग्रे वर्णानामभावो अवसानं तस्मिन् अवसाने अंते वर्तमानानां झभानां जबा भवंति पक्षे विकल्पेन चपा भवंति । अनेन सौ धौ च रूपद्वयं विधाय (हसेपः सेः०) इति सिलोपे कृते एकत्र घस्य कः । अन्यत्र गः । स्वरादौ (स्वर०) भकारादौ विभक्तौ तु (दादेर्घः) इति घत्वे कृते (आदिजबानां०) इति दस्य धः (झभे जबाः) घस्य गः (स्वर०) सुपि (दादेर्घः । आदि जबानां० । खसे चपा झसानां । किलात्षः सः कृतस्य) इति षत्वं । (कषसंयोगे क्षः ।) ककारषकारसंयोगे क्षो भवति । गोधुक्षु इति सिद्धं ॥

मधुलिह्शब्दस्य विशेषः । (हो ढः) धातोर्हकारस्य ढत्वं भवति धातोर्झसे परे नाम्नश्च रसे पदांते च (वावसाने ।) इति ढकारस्य डकारटकारौ । मधुलिट् मधुलिड् । मधुलिहौ । मधुलिहः । हेमधुलिट् हे मधुलिड् । हे मधुलिहौ । हे मधुलिहः । मधुलिहं । मधुलिहौ । मधुलिहः । मधुलिहा । मधुलिड्भ्यां । मधुलिड्भिः । इत्यादि ॥ तुरासाह्शब्दस्य भेदः । (सहेः षः साढि) साढिरूपे सहेर्धातोः सकारस्य षकारादेशो भवति । त्वरं सहतीति तुराषाट् तुराषाड् इत्यादि ॥

लिह् आस्वादने । मधुपूर्वः क्विप्प्रत्ययान्तः । मधु मकरंदं पुष्करसं लेढीति मधुलिट् भ्रमरः । मधुलिह्शब्दस्य रसे पदांते च विशेषः । सूत्रं । (हो ढः) ह ६-१ स्वर० (स्रो० । हवे । उओ ।) ढः । १-१ । (स्रो०) सिद्धं । धातुसंबंधिनो हकारस्य झसे परे ढत्वं भवति नाम्नश्च नामत्वं प्राप्तस्य रसे परे पदांते च । उभयोः १-१ रूपद्वयं उभयत्रापि हस्य ढः (हसे० वावसाने ।) एकत्र ढः अन्यत्र डः । स्वरादौ स्वर० भकारादौ (हो ढः) इति ढत्वे (झबे जबाः) ढस्य डः स्वर० सुपि (हो ढः । खसे च०) ढस्य टः । स्वर० मधुलिट्त्सु इत्यत्र क्वचिदपदांतेपि पदांतताश्रयणीयेति न्यायात् टोरंत्यादिति सूत्रेण सस्य षत्वाभावः । एवं तुराषाट् पृतनाषाट् हव्यवाट् प्रष्ठवाट् भारवाट्प्रभृतयः ॥

मित्रद्रुह्शब्दस्य भेदः । [द्रुहादीनां घत्वढत्वे वा] द्रुहादीनां धातूनां घत्वढत्वे वा भवतः रसे पदांते च । मित्रध्रुक् मित्रध्रु-

ग् मित्रध्रुट् मित्रध्रुड् । मित्रद्रुहौ । मित्रद्रुहः । धावप्येवं ॥ मित्रद्रुहं । मित्रद्रुहौ । मित्रद्रुहः । मित्रद्रुहा । ( झबे जबाः ) मित्रध्रुग्भ्यां मित्रध्रुड्भ्यां । मित्रध्रुक्षु मित्रध्रुट्सु ॥ इत्यादि । एवं तत्त्वमुहादयः ॥

हकारांतानामपि द्रुहादीनां वाक्यांतरे विशेषमाह । ( द्रुहादीनां घत्वढत्वे वा ) द्रुहादीनामिति द्रुहमुहस्नुहस्निहां रसे पदांते च घत्वढत्वे वा भवतः । विकल्पेन घत्वे कृते । द्वितीयपक्षे ढत्वं भवति । द्रुह जिघांसायां । मुह वैचित्ये । स्नुह उद्गिरणे क्षरणे । स्निह प्रीतौ उद्गिरणे च । णश अदर्शने एते द्रुहादयः । अत्र द्रुहो दकारादित्वात् ( दादेर्घः ) इति प्राप्तस्य घत्वस्य विकल्पः अन्येषां तु अप्राप्तस्य घत्वस्य विकल्प इत्यर्थः । मित्राय द्रुह्यतीति मित्रद्रुह् । सर्वत्रापि । १–१ । रूपद्वये ( दादेर्घः ) इति घः । रूपद्वये च ( होढः ) इति ढः । ( आदिजबानां० ) इति सर्वत्र द्रुस्थाने ध्रु ( हसे पः० । वावसाने ) घस्य यथासंख्यं कगौ । ढस्य च टडौ । मित्रध्रुक् मित्रध्रुग् मित्रध्रुट् मित्रध्रुड् । ४ । एवं सिविषये रूपचतुष्टयं । मित्रद्रुहौ । मित्रद्रुहः । भकारादौ सुपि च रूपद्वयं । तत्र एकत्र घत्वे कृते अन्यत्र ढत्वे कृते ( आदिजबानां० ) इति द्रु इत्यस्य ध्रु । भकारादौ ( झबे जबाः । ) घस्य गः ढस्य च डः । मित्रध्रुग्भ्यां मित्रध्रुड्भ्यां । मित्रध्रुग्भिः मित्रध्रुड्भिः । सुपि च ( खसे च० ) इति घस्य कः । ढस्य च टः । कत्वे ( क्विला० ) कषसंयोगे क्षः । मित्रध्रुक्षु । टत्वे ( स्वर० ) मित्रध्रुट्सु । धौ सिवत् । एवं तत्त्वमुहृपुत्रस्निहक्षीरस्नुहोपि साध्याः । तत्त्वं प्रति मुह्यतीति तत्त्वमुट् । हांतानां साधनमेतत् । यकारवकारांता अप्रसिद्धाः ॥

रेफांतश्चतुर्शब्दो नित्यं बहुवचनांतः ( चतुराम्शौ च ) चतुर्शब्दस्य आमागमो भवति पंचसु परेषु शौ च [ मिदंत्यात्स्वरात्परो वक्तव्यः । ] चत्वारः । चतुरः । चतुर्भिः । चतुर्भ्यः । २ । ( रः संख्यायाः ) रेफांतसंख्यायाः परस्यामो नुडागमो भवति । णत्वं द्वित्वं च । चतुर्णां । चतुर्षु ॥

रांतानाह । रेफांतश्चतुर्शब्दो नित्यं बहुवचनांतः । १–३ । सूत्रं । चतुर् । ६–१ सांके० । आम् १–१ ( हसे० ) । शि । ७–१ ( ङेरौ० । ) टिलोपः । च १–१ ( अव्य० ) चतुर्० पंचसुग्रहणं समासांतत्वसूचकं । यथा प्रियाश्चत्वारो यस्यासौ प्रियचत्वाः । प्रियचत्वारौ । प्रियचत्वारः । हे प्रियचत्वाः इत्यादि ज्ञेयं । अन्यथा बहुत्वे पंचस्विति पदं न संभवति । शौ चेति पदकथनेन नपुंसके । ( जश्शसोः शिः ) इति

शौ परेऽपि आम् आगमो भवतीत्यर्थः । [ मिदंत्यात्स्वरात्परो वक्तव्यः ] रकारात्पूर्वं आ ( उवं० ) स्वर० ( स्रो० । ) ३–३ । ४–३ । ५–३ । जल० । ६–३ । सूत्रं ( रः संख्यायाः ) र । ५–१ ( स्वर० । स्रो० ) संख्या । ५–१ ( ङितां यट् । सवर्णे० ) रेफांतो यः संख्यावाची चतुर्शब्दस्तस्मात्परस्यामो नुडागमः स्यात् । अनेन नुट् ( ष्टुनों० । राद्यपो० ) जलतुं० । चतुर्णामिति सिद्धं । ७–३ । ( क्विला० ) जल० चतुर्षु ( दोषां रः ) इति सूत्रेण कृतस्यैव रेफस्य सप्तमीबहुवचने परे विसर्गो नान्यस्येति वक्तव्यं । अतः चतुर्ष्वित्यत्र न विसर्गः । [ चतुरनडुहोरम् संबुद्धौ ] हे प्रियचत्वः । लञङणांता अप्रसिद्धाः ॥

नकारांतो राजन्शब्दः ( नोपधायाः ) इति पंचसु दीर्घः । ( नाम्नो नो लोपशधौ ) नाम्नो नकारस्यानागमजस्य लोपश् भवति रसे पदांते चाधौ । चकारात्क्वचित् नाम्नो नकारस्य लोपश् न भवति । सुष्ठु हिनस्ति पापमिति सुहिन् । राजा । राजानौ । राजानः । अधाविति विशेषणात् । हे राजन् । हे राजानौ । हे राजानः । राजानं । राजानौ । ( अल्लोपः स्वरेऽम्वयुक्ताच्छसादौ ) ( स्तोः श्चुभिः श्चुः ) इति चुत्वे नकारस्य ञकारः । ( जञोर्ज्ञः ) जकारञकारयोः संयोगे ज्ञ इत्यक्षरं भवति । राज्ञः । राज्ञा । योगानामुभयतः सबन्धः । लोपशि पुनर्न संधिरिति नियमात् ( आङ्कि ) इत्यात्वं न भवति । राजभ्यां । राजभिः । राज्ञे । राजभ्यां । राजभ्यः । राज्ञः । राजभ्याम् राजभ्यः । राज्ञः । राज्ञोः । राज्ञां । राज्ञि ( वेङ्योः ) राजनि । राज्ञोः । राजसु । अधाविति विशेषणात् । हे राजन् । हे राजानौ । हे राजानः । एवं यज्वन् आत्मन् सुधर्मन्प्रभृतयः । यज्वा । यज्वानौ । यज्वानः । यज्वानं । यज्वानौ । अम्वयुक्तादिति विशेषणादल्लोपो नास्ति । यज्वनः । यज्वना इत्यादि ॥

नांतानाह । नकारांतो राजन्शब्दः । तस्य पंचसु वचनेषु ( नोपधायाः ) इति सूत्रेण दीर्घः । राज दीप्तौ । राजते इति राजा । ( राजादेरन् )१–१ सू । सूत्रं ( नाम्नो० । ) नामन् ६–१ । ( अल्लोपः स्वरे ) स्वर०( स्रो० ) । न्६–१ स्वर०( स्रो० ) पश्चात् ( हबे । उओ ) लोपश् । १–१ । हसे० । पश्चात् ( हबे । उओ ) न धिः अधिस्तस्मिन्

अधौ । ७-१ ( ङेरौ० । ) टिलोपः । पश्चात् ( स्वर० । ) चतुःपदं । नाम्न इति । शब्दस्य संबंधिनो नकारस्य लोपश् वर्णविरोधरूपो भवति । परं अनागमजस्य शब्दांन्तर्भूतस्यैव परं केनापि सूत्रेणागतस्य नस्य लोपश् न भवति रसे परे पदांते च । चकारात् सुहिन् । सुहिंसौ । सुहिंसः । प्रशान् इत्यादौ नकारस्य लोपो न । धौ च लोपश् न भवति । अनेन सौ नस्य लोपः । राजा । राजानौ । राजानः । अधौ इति विशेषणात् धौ नस्य लोपश् न । हे राजन् । राजानं । राजानौ । इति । शसि ( अल्लोपः स्वरे ) इत्यकारलोपः ( स्तोः श्चुभिः श्चुः ) इति चुत्वे चवर्गे क्रियमाणे नकारस्य ञकारः । ततः ( जञोर्ज्ञः ) जश्च ञश्च जञौ तयोः जञोः जकारञकारयोर्योगे ज्ञो भवतीत्यर्थः । अनेन ज्ञ्योगे ज्ञः स्वर० । (स्रो०) । टाविषयेऽप्येवं । भकारादौ ( नाम्नो नो लोपशधौ ) ततः लोपशि पुनर्न संधिरिति कारणात् ( अद्भि ) इति सूत्रेण आकारो न भवति । राजभ्यां । राजभिः । राज्ञे । ङौ ( वेङ्योः ) सुपि ( नाम्नो० ) एवं यज्वन् आत्मन् सुधर्मन् सुपर्वन्प्रभृतयोपि साध्याः । परं शसादौ अम्वयुक्तादिति विशेषणात् मकारवकारयुक्तत्वात् अल्लोपो नास्ति ( अल्लोपः स्वरे ) इति न भवति । तेन यज्वनः । यज्वना इत्यादि । उक्षन् मूर्द्धन्शब्दौ तु राजन्वत् ॥

**श्वन् युवन् मघवन् शब्दानां पंचसु राजन्शब्दवत्प्रक्रिया । शसादौ तु विशेषः ( श्वादेर्वे उः ) श्वादेर्वकार उत्वं प्राप्नोति शसादौ स्वरे परे तद्धिते ईपि ईकारे च । तद्धिते स्वरे तु न भवति । अत्र नियामकं पाणिनीयसूत्रम् ( श्वयुवमघोनामतद्धिते ) इति । शुनः । शुना । श्वभ्यां । श्वभिः । इत्यादि । युवन्शब्दे तु वकारस्योत्वे कृते ( सवर्णे दीर्घः सह ) यूनः । यूना । युवभ्यां । युवभिरित्यादि । मघोनः । मघोना । मघवभ्यामित्यादि ॥**

श्वन् युवन् मघवन् शब्दाः पंचसु राजन्वत्साध्याः । श्वा कुक्कुरवाची युवा तरुणवाची मघवा इंद्रवाची इत्येतेषां शब्दानां पंचसु स्यादिषु वचनेषु राजन्शब्दवत्साधना । शसादौ तु विशेषस्तमेवाह । सूत्रं ( श्वादेः० ) श्वा आदिर्यस्य स श्वादिस्तस्य श्वादेः ६-१ ( ङिति । ङस्य । स्रो० ) (श्वादेर्वे उः) इति वा सूत्रं । श्वादेरिति श्वन्युवन्मघवन्शब्दसंबंधिवकारः उत्वमुकारभावं प्राप्नोतीति भावः । शसादौ स्वरे परे तद्धिते प्रत्यये ईपि ईकारे च । ईपि प्रत्यये परे तु शुनी यूनी मघोनी इति भवति चकारेण सहितो अकारः इति सस्वरस्यापि वकारस्य स्थाने उकारः ( स्वर० ) शसादौ सर्वत्र उकारः । भकारादौ सुपि च ( नाम्नो नो० ) संबोधने राजन्शब्दवत् । श्वा । श्वानौ ।

श्वानः । श्वानं । श्वानौ । ( श्वादेर्वे० ) शुनः । शुना । श्वभ्यां । श्वभिः । इत्यादि । युवा । युवानौ । युवानः । युवानं । युवानौ । युवन्शब्दस्य शसादौ स्वरे ( श्वादेर्व उः ) इति उत्वे कृते ( सवर्णे० ) मघवन्शब्दे उकारे कृते ( उ ओ ) यूनः । यूना । मघोनः । मघोना । मघवभ्यां । मघवभिरित्यादिरूपाणि ज्ञेयानि । तकारान्तमघवच्छब्दस्य तु मघवान् । मघवन्तौ । मघवन्तः । मघवन्तं । मघवन्तौ । मघवतः । मघवता । मघवद्भ्याम् । मघवद्भिः । इत्यादिरूपाणि ॥

**पथिन्शब्दस्य भेदः ( इतोऽत्पंचसु ) पंचसु स्यादिषु परेषु पथ्यादीनामिकारस्याकारादेशो भवति ( थो नुट् ) पथ्यादीनां थकारस्य नुडागमो भवति पंचसु स्यादिषु परेषु । पन्थन् सि इति स्थिते ( आ सौ ) पथ्यादीनां टेरात्वं भवति सौ परे । पंथाः । पंथानौ । पंथानः । आत्वविधानान्न सेर्लोपः । हे पंथाः । पंथानं । पंथानौ ( पथां टेः ) पथिन्शब्दादीनां टेर्लोपो भवति शसादौ स्वरे परे । पथः । पथा । पथिभ्यां । पथिभिरित्यादि । एवं मथिन्ऋभुक्षिन्शब्दौ ॥**

पथिन्शब्दस्य भेदः । सूत्रं ( इतोऽत्पंचसु ) ६–१ स्व० ( स्रो० ) अत् १–१ ( हसे०अतोत्युः । उओ० । एदो० ) पंचन् ७–३ ( नाम्नो० ) सिद्धं । स्यादिषु पंचसु वचनेषु परेषु पथ्यादीनां पथिन्मथिन्ऋभुक्षिन्शब्दानामिकारस्य अकारो भवति । अनेन सिऔजस्अम्औवचनेषु थि इत्यस्य थाः । सूत्रं ( थो नुट् ) थः ६–१ स्वर०( स्रो० ) नुट् १–१ ( हसे० हवे । उओ ) पथ्यादीनां पथिन्मथिन्शब्दयोः थकारस्य पंचसु वचनेषु नुडागमो भवति । टित्वादादौ थस्य पूर्वम् । पन्थन् सि इति स्थिते सति । सूत्रं ( आ सौ ) आ १–१ ( सांके० ) सि ७–१ ( ङसौ० ) टिलोपः । स्वर० सिद्धं । पथ्यादीनां टेः सौ परे आत्वं भवति । अनेन सौ नूसहितस्य थइत्यस्य था । टेरात्वकरणादेव सेर्लोपो न किंतु । ( स्रो० । नश्चापदांते० ) पंथाः । मार्गः । संबोधनेऽप्येवमेव । हे पंथाः । अग्रे द्वितीयाद्वित्वं यावत् । ( नोपधायाः ) इति दीर्घः । स्वर० शसादौ विशेषः । पथिन् । ३–३ । सूत्रं । ( पथां टेः ) । स्वर० । (मोनु०) टि । ६–१ । ( ङिति । ङस्य । स्रो० ) पथिन्मथिन्ऋभुक्षिन्शब्दानां टेर्लोपो भवति शसादौ स्वरे परे । अनेन शसादौ स्वरे टेः लोपः । स्वर० । भकारादौ ( नाम्नो० ) सुपि ( नाम्नो० ) नकारस्य लोपाशि कृते ( क्विला० ) एवं मथिन्ऋभुक्षिन्शब्दौ ज्ञेयौ । मंथाः मंथनदंडः । ऋभुक्षाः इन्द्रः । ऋभुक्षाणौ । ऋभुक्षाणः । हे ऋ-

भुक्षाः । ऋभुक्षाणं । ऋभुक्षाणौ । ऋभुक्षः । ऋभुक्षा ( पथां टेः ) ऋभुक्षिभ्यां । ऋभुक्षिभिः ( नाम्नो० ) ऋभुक्षे । इत्यादि ॥

दंडिन्शब्दस्य भेदः ( इनां शौ सौ ) इन्हन्पूषन्अर्य्यमन् इत्येतेषां शौसौ चाधौ परे उपधाया दीर्घो भवति । नलोपसिलोपौ । दंडी । दंडिनौ । दंडिनः । हे दंडिन् । हे दंडिनौ । हे दंडिनः । दंडिनं । दंडिनौ । दंडिनः । दंडिना । दंडिभ्यां । दंडिभिः । इत्यादि । एवं ब्रह्महन्शब्दः । ब्रह्महा । ब्रह्महणौ । ब्रह्महणः । हे ब्रह्महन् । हे ब्रह्महणौ । हे ब्रह्महणः । ब्रह्महणं । ब्रह्महणौ । शसादौ तु अल्लोपः । ( हनो घ्ने ) हंतेर्धातोर्हकारस्य घकारो भवति नकारे ञ्णिति च परे । घसंयोगो णत्वनिषेधार्थः । ब्रह्मघ्नः । ब्रह्मघ्ना । ब्रह्महभ्यां । ब्रह्महभिः । इत्यादि । अर्य्यम्णः । अर्यम्णा । अर्यमभ्यामित्यादि । पूषा । पूषणौ । पूषणः । हे पूषन् । हे पूषणौ । हे पूषणः । पूषणम् । पूषणौ । ( ष्णोः ष्णः ) षकारणकारसंय्योगे ष्णो भवति शसादौ स्वरे परे । पूषन्शब्दस्य शसादौ स्वरे परे वा टेर्लोपः । पूष्णः । पूष्णा । पूषभ्याम् । पूषभिः । पूष्णे [ ङौ टिलोपो वा वक्तव्यः ] पूष्णि पूषणि । पूष्णोः । पूषसु ॥

दंडिन्शब्दस्य भेदः । सूत्रं । ( इनां शौ सौ । ) इन् । ६-३ । स्व० । ( मोनु० ) शि । ७-१ । ( ङेरौ० ) सिद्धं । इन्प्रत्ययान्तः इन्निरयुपलक्षणत्वाद्विन्प्रत्ययांतोपि । हन्धातुः ब्रह्मभ्रूणवृत्राद्युपपदपूर्वः क्विप्प्रत्ययांतः । पूषन् सूर्यवाची अर्यमन् सूर्यवाची । इत्येतेषां शौ नपुंसके जश्शसोः स्थाने जाते शौ च पुंल्लिंगे प्रथमैकवचने धिवर्जिते परे दीर्घो भवति । ( नोपधायाः ) इत्यनेन सिद्धौ सत्यां ( इनां० ) इति सौ परे एव दीर्घः स्यान्न तु पंचस्विति नियमार्थमुक्तं । अनेन सौ दीर्घः । ( हसेपः०नाम्नो० । ) स्वरादौ सर्वत्र ( स्वर० ) रसे च ( नाम्नो० ) सुपि ( क्लि० ) धौ अधाविति विशेषणान्न लोपश्दीर्घौ । हे दंडिन् । शेषं सुकरं । ब्रह्मन्शब्दो दंडिन्शब्दवत् । ब्रह्महणौ । ( अवकुप्वंतरेरि ) इति णत्वं । ब्रह्महा । ब्रह्महणौ । ब्रह्महणः । ब्रह्महणं । ब्रह्महणौ । शसादौ तु ( अल्लोपः स्वरे ) इत्यल्लोपे कृते । सूत्रं ( हनो घ्ने ) हन् । ६-१ । स्वर० ( स्त्रो० ) घ । १-१ । ( हबे० । ञओ ) न ७-१ ( अइए ) सिद्धं त्रिपदं ।

हंतेरिति। हन् इत्यस्य धातोः संबंधिनो हकारस्य घत्वं भवति नकारे परे तथा ञिति णिति च परे । अनेन हस्य घः । स्वर० हस्य घत्वे कृते घसंयोगः ( ष्रुनों० ) इति णत्वनिषेधार्थः । हंतेरकारपूर्वस्यैव सति णत्वनिमित्ते णत्वं नतु व्यंजनपूर्वस्य इति वचनात् घकारनकारयोगे जाते सति ( ष्रुन्नों० णोनंते ) इति नस्य णत्वप्रतिषेधः । स्वर० रसे परे ( नाम्नो० ) ङौ तु ( वेङ्योः ) ब्रह्मघ्नि ब्रह्महणि । धौ दंडिनूवत् । हे ब्रह्महन् । एवं पूषन्अर्यमन्शब्दौ । अत्र शसादौ ( अल्लोपः स्वरे ) इत्यल्लोपे कृते (ष्रुन्नों०)स्वर० हसादौ ( नाम्नो० ) शेषं कंठ्यं । पूषा । पूषणौ । पूषणः । पूषणं । पूषणौ । पूष्णः । पूष्णा । पूषभ्यां । पूषभिरित्यादि ७–१ ङौ तु ( वेङ्योः ) पूष्णि पूषणि । एवं अर्यमा । अर्यमणौ । अर्यमणः । अर्यमणं । अर्यमणौ । अर्यम्णः । अर्यम्णा अर्यमभ्यां । अर्यमभिः । अर्यमणि अर्यम्णि । अर्यम्णोः । अर्यमसु । इत्यादि ॥

**संख्याशब्दाः पंचन्प्रभृतयो बहुवचनांतास्त्रिषु लिंगेषु सरूपाः । पंचन् जस् इति स्थिते ( जश्शसोर्लुक् ) षकारनकारांतसंख्यायाः परयोर्जश्शसोर्लुग्भवति । [ लुकि न तन्निमित्तं ] लुकि सति तन्निमित्तं कार्यं न स्यात् । तेन ( नोपधायाः ) इति दीर्घत्वं न । पंच । पंच । पंचभिः । पंचभ्यः । २ । ( ष्णः ) षकारनकारांतसंख्यायाः परस्यामो नुडागमो भवति ( नोपधायाः ) इति दीर्घत्वं ( नाम्नो नो लोपशधौ ) पंचानां । पंचसु । एवं सप्तन्नवन्दशन्प्रभृतयः ॥**

संख्यावाचकाः शब्दाः पंचन्प्रभृतयो बहुवचनांतास्त्रिषु लिंगेषु सदृशरूपाः । जसि शसि च सूत्रं ( जश्शसोर्लुक् ) जस् च शस् च जश्शसौ तयोर्जश्शसोः ६–२ स्वर०( स्रो०) लुक् १–१ (हसे०नामि० ) वृत्तिः कंठ्या । अनेन जश्शस्इत्येतयोर्लुक् । प्रत्ययलोपे प्रत्ययलक्षणं न यातीति न्यायात् ( नोपधायाः ) इति सूत्रेण दीर्घत्वप्राप्तौ निषेधहेतुमाह। [लुकि न तन्निमित्तम् ] इति । लुकि कृते तन्निमित्तं कार्यं न भवति स एव निमित्तं कारणं यस्य तत्तन्निमित्तं । यथा ( नोपधायाः ) इति सूत्रेण दीर्घत्वप्राप्तावपि न दीर्घता तर्हि दीर्घं विहाय लुक् कार्यः इत्यत्रोच्यते । कृताकृतप्रसंगी यो विधिः स नित्यः इति आभावरूपं तु न भवत्येव । तेन ( नाम्नो नो लोपशधौ ) इति भवत्येव । ३–३ । ४–३ । ५–३ । ( नाम्नो० । ) आमि । सूत्रं । ( ष्णः )ष् च न् च ष्ण् तस्मात् ष्णः । ५–१ । स्वर० षकारनकारांतसंख्यायाः संख्यावाचिनः शब्दात्परः य आम् तस्य नुडागमो भवति । अनेन न् आगमः । ( नोपधायाः ) इति दीर्घः ( नाम्नो० । ) सुपि ( नाम्नो० ) एवं सप्तन्नवन्दशन्प्रभृतयोऽपि अष्टादशन्यावत्साध्याः ॥

अष्टन्शब्दस्य भेदः । ( अष्टनो डौ वा ) अष्टन्शब्दात्परयोर्जस्शसोर्वा डौ भवति । डित्वाट्टिलोपः । अष्टौ अष्ट । अष्टौ अष्ट ( वासु ) वा आ आसु । अष्टन्शब्दस्य आसु परासु विभक्तिषु वा टेरात्वं भवति । अष्टभिः अष्टाभिः । अष्टभ्यः२अष्टाभ्यः २ । अष्टानां । अष्टसु अष्टासु ॥

अष्टन्शब्दस्य भेदः । सूत्रं ( अष्टनो डौ वा ) अष्टन् । ६–१ । स्वर०(स्त्रो०)डौ १–१ सांके० ( हवे । उ ओ ) वा । ३–१ । ( अव्य० )सिद्धमिदं सूत्रं । अष्टन्शब्दात्परयोर्जस्शसोर्वा विकल्पेन डौ भवति । गुरुत्वात्सर्वस्य जसो डौ । जसि शसि च रूपद्वयं । अनेन एकत्र डौ औ डित्वाट्टिलोपः । स्वर० अन्यत्र जश्शसोर्लुक् । ( नाम्नो० । ) तृतीयादिवहुत्वेपि रूपद्वयं। सूत्रं ( वासु ) वा । ३–१। ( अव्य०) आ१–१ सांके०इदम् ७–३ ( त्यदा० । स्भ्यः । आबतः स्त्रियां । सवर्णे० ) त्रिपदं । अष्टन्निति । अष्टन्शब्दस्य आसु तृतीयादिषु विभक्तिषु परासु सतीषु वा आत्वं आकारो भवति । अनेन । ३–३ । ४–३ । ५–३ । वा आकारः । उभयत्रापि ( ष्णः इति नुट् । तृतीयरूपे ( नोपधायाः ) इति दीर्घः। नाम्नः पक्षद्वयेपि एकत्र आकारे कृते अन्यत्र ( नाम्नो० ) पक्षद्वयेपि सदृशं रूपम् ॥

मकारांत इदम्शब्दः ( इदमोऽयं पुंसि ) इदम्शब्दस्य पुंसि विषये अयमादेशो भवति सिसहितस्य । अयं। इदम् औ इति स्थिते । द्विवचनादौ ( त्यदादेष्टेरः स्यादौ ) इत्यकारः । इद औ इति स्थिते ( दस्य मः ) त्यदादीनां दकारस्य मत्वं भवति स्यादौ परे । इमौ । इमे । सर्वादित्वात् ( जसी ) इतीकारः। त्यदादीनां धेरभावः । इमं इमौ इमान् ( अन टौसोः ) इदमो अनादेशो भवति टौसोः परयोः( टेन ) अनेन ( स्भ्यः ) इदमः सकारे भकारे च परे अकारो भवति कृत्स्नस्य ( अद्धि ) इत्यात्वं । आभ्यां ( भिस्भिस् ) इदमदसोर्भिस् भिसेव भवति न भकारस्याकारः ( एस्भि बहुत्वे ) एभिः। अस्मै। आभ्यां। एभ्यः। अस्मात् । आभ्यां। एभ्यः। अस्य । अनयोः[1] । एषां।

---

१ द्वितीयायां–टौसोश्च परयोः इदम्शब्दस्य ‘ एन ’ आदेशो भवतीति पाणिनीये ।

अस्मिन् । अनयोः । एषु । किम्शब्दस्य ( त्यदादेष्टेर:० ) इत्यकारे कृते सर्वशब्दवद्रूपं ज्ञेयं । कः । कौ । के । कं । कौ । कान् । केन । काभ्यां । कैः । कस्मै । काभ्यां । केभ्यः । कस्मात् । काभ्यां । केभ्यः । कस्य । कयोः । केषां । कस्मिन् । कयोः । केषु ॥

मकारांतानाह । मकारांत इदम्शब्दः । सौ सूत्रं ( इदमोऽयं० ) इदम् । ६–१ । स्वर० ( स्रो० । ) अयम् । १–१ ( हसे० । मोनु० । अतोत्युः । उओ । एदो० ) पुंस् ७–१ स्वर० । सिद्धं । इदम्शब्दस्य पुंसि विषये पुंलिंगे एव सौ प्रथमैकवचने परे अयम् इत्यादेशो भवति ॥ गुरुत्वात्सर्वस्य । अनेन सौ परे अयम् । मांतकरणसामर्थ्यादेव ( त्यदादेष्टेरः स्यादौ ) इति न भवति । अन्यथा अयं इत्येवावक्ष्यत् । अनेन अयम् इत्यादेशः ( हसे० मोनु० ) केचित्तु सिसहितस्यैव अयमित्यादेशमिच्छंति । द्विवचनादौ तु ( त्यदादेष्टेः० ) इत्यकारे कृते सूत्रं ( दस्य मः ) द ६–१ ( ङस्य ) म १–१ ( स्रो० ) त्यदादीनां दकारस्य असंयुक्तस्य स्यादौ सर्वविभक्तौ परे मत्वं भवति । अनेन सर्वविभक्तिषु मकारः । १–२ । ( ओऔऔ ) १–३ ( जसी । अइए ) २–१ ( अम्श० मोनु० ) २–२ ( ओऔऔ । अम्श० । सो नः पुंसः । शसि ) ३–२ सूत्रं ( अन टौसोः ) अन १–१ सांके० । टा च ओस् च टौसौ तयोः टौसोः ७–२ स्वर० ( स्रो० ) इदम्शब्दस्य तृतीयैकवचने ओसि षष्ठीसप्तमीद्विवचने परे अन इत्यादेशो भवति । अनेन टावचने परे अन आदेशः ( टेन । अइए ) अग्रे द्वित्वे सूत्रं ( स्भ्यः ) स् च भ् च स्भ् तस्मिन् ७–१ स्व० अ १–१ ( स्रो० ) पश्चात् ( इ यं स्व० ) स्व० द्विपदं । इदम्शब्दस्य सकारे भकारे च परे अकारो भवति कृत्स्नस्य समग्रस्यैवेत्यर्थः । नत्वंतस्य । अनेन तृतीयाचतुर्थीपंचमीद्वित्वे इदमो अकारः ( अद्वि ) इत्यात्वं ३–३ । ४–३ । ५–३ ( स्भ्यः ) इत्यकारः । ततो भिसि सूत्रं ( भिस्भिस् ) भिस् १–१ ( हसे० ) भिस् १–१ ( हसे० ) द्विपदं इदम्अदस्संबंधी यो भिस् स भिस् एव भवति । अत्र भिसो भिस्करणं ( स्भ्यः ) इति सूत्रेण अकारनिषेधार्थं । एतदेवाह । न भकारस्याकार इति । ( एस्भि बहुत्वे ) परं कप्रत्ययसहितयोर्न । ततः इमकैः अमुकैः । एवं चतुर्थीपंचमीबहुत्वेऽपि । ४–१ ( सर्वादेः स्मट् । स्भ्यः । एएऐ ) ५–१ ( ङसिरत् । स्भ्यः । सवर्णे० ) ६–१ ( ङस्य ) ६–२ । ७–२ ( अन टौसोः । ) ओसि । ( एअय् । ) स्वर० आमि ( नुडामः । स्भ्यः । एस्भि बहुत्वे । क्विला० ) स्वर० ७–१ ( ङि स्मिन् । स्भ्यः । एस्भि० । क्विला० । ) त्यदादित्वात्संबोधनाभावः । " इदमः प्रत्यक्षभवे समीपतरवर्त्ति चैतदो रूपं । अदसस्तु विप्रकृष्टे तदिति परोक्षे विजानीयात् ॥ " किम्शब्दस्य ( त्यदादेष्टेः० )

इत्यनेन अकारे कृते । सर्वशब्दवत्प्रक्रिया । त्यदादित्वाद्धेरभावः (संबोधनाभावः) इत्यादयो मांताः शब्दा ज्ञेयाः । झढघभांता अप्रसिद्धाः ॥

धकारांतस्तत्वबुधूशब्दः । तस्य रसे पदांते बकारस्य (आदिजबानां०) इति भकारः । (वावसाने०) तत्वभुद् तत्वभुत् । तत्वबुधौ । तत्वबुधः । हे तत्वभुत् हे तत्वभुद् । तत्वबुधं । तत्वबुधौ तत्वबुधः । तत्वबुधा । तत्वभुद्भ्यां । तत्वभुद्भिः । इत्यादि ॥

धकारांतानाह । धकारांतः तत्वबुधूशब्दस्तस्य रसे पदांते च (आदिजबानां झभांतस्य झभाः स्ध्वोः) इति बकारस्य भकारः । सौ धौ च सिलोपे कृते (वावसाने०) इति धकारस्य दकारतकारौ । स्वरादौ स्वर० भकारादौ (झबे जबाः) स्वर० । सुपि (खसे चपा झसानां) धस्य तः स्वर० एवं मर्माविध् ॥

जकारांतः सम्राजूशब्दः (छशषराजादेः षः) छकारांतस्य शकारांतस्य षकारांतस्य च राजूयजूसृजूमृजूभ्राजादेश्च षकारो भवति धातोर्झसे परे नाम्नश्च रसे पदांते च आख्याते । षस्य षत्वं डत्वनिषेधार्थम् । (षो डः) षकारस्य डत्वं भवति धातोर्झसे परे नाम्नश्च रसे पदांते च । (वावसाने) इति टकारः डकारश्च । सम्राट् सम्राड् । सम्राजौ सम्राजः । हे सम्राट् हे सम्राड् । सम्राजं सम्राजौ सम्राजः । सम्राजा । सम्राड्भ्यां । सम्राड्भिः । इत्यादि । एवं विराजादयः ॥

अथ जांताः । तत्र जकारांतः सम्राजूशब्दः । तस्य स्वरादौ । स्वर० । रसे पदांते च विशेषः । सूत्रं (छशषराजादेः षः ।) छश्च शश्च षश्च राजादिश्च छशषराजादिः तस्य । ६–१ (ङिति । ङस्य । स्रो०) ष १–१ । (स्रो०) सिद्धं । छकारांतस्य तत्वप्राच्छादेः शकारांतस्य विविशादेः षकारांतस्य द्विष् इत्यादेः तथा राजूयजूसृजूमृजूभ्राजादेश्च षकारो भवति । (षष्ठीनिर्दिष्टस्य०) इत्यंतस्य । धातोर्झसे परे नाम्नश्च रसे पदांते च । उभयोः आदिशब्दात् व्रश्चूभ्रस्जूपरिव्राजां ग्रहणं । षकारषत्वकरणं डत्वनिषेधार्थं षस्य षत्वे कृते (षो डः) इति डकारो न भवति । यत्तु षस्य षत्वं डत्वनिषेधार्थमिति तदपि द्वेष्टीत्यादावेव नतु सर्व्वत्र । यथा द्विष्धातोस्त्यादौ द्वेष्टीत्यादिरूपं । यद्वा छशषेति ग्रहणं व्यर्थमिति केचित् । प्रयोगदर्शनाभावात् । यत्तु षस्य षत्वं डत्वनिषेधार्थमिति तदपि व्यर्थं । द्विट् द्विड् । द्विषौ । द्विषः । अद्वेट्

इत्यादौ षस्य षत्वेऽपि डत्वस्य दर्शनात् । तथा द्वेष्टीत्यादावपि षस्य षत्वं न किन्तु केवलं ( ष्टुभिः ष्टुः ) अनेन रसे पदांते च डस्य षः । ततः सूत्रं । ( षो डः ) ष् ६-१ स्व० ( स्त्रो० ) ड १-१ ( स्त्रो० ) सिद्धं । षकारस्य डकारो भवति धातोर्झसे परे नाम्नश्च रसे पदांते च । केचित्तु ( वावसाने ) इत्यनेनैव षकारस्य ऋटुरषा मूर्द्धन्या इति स्थानसवर्णौ मूर्द्धन्यौ टकारडकारौ स्यातामिति तथा भ्यां भिस् इत्यादौ ष ( झबे जबाः ) अनेन डत्वं स्यादतः ( षो डः ) इति सूत्रं व्यर्थमिति वदन्ति तच्चिंत्यं। सौ धौ च ( हसे० ) इति सिलोपे कृते षस्य डः ( वावसाने ) डस्य टः [ समो मस्य राट्शब्दे परे अनुस्वाराभावो वक्तव्यः ] सम्राट् सम्राड् । भकारादौ षस्य डत्वे कृते स्वर० सुपि डत्वे कृते ( खसे० ) स्वर० सम्राट्सु । क्वचित् हसादौ विभक्तौ अपदांतेऽपि पदांतताश्रयणीयेति ( टोरंत्यात् ) इति ष्टुत्वाभावः । शेषं कंठ्यम् । एवं विराजादयः । विराट् विराड् । विराजौ । विराजः । राट् राड् । राजौ । राजः । एवं देवान् यजतीति देवेट् देवेड् । देवेजौ । देवेजः । विश्वसृट् विश्वसृड् । विश्वसृजौ । विश्वसृजः । परिमृट् परिमृड् । परिमृजौ परिमृजः । विभ्राट् विभ्राड् । विभ्राजौ । विभ्राजः । एवं परिव्राट् परिव्राड् । परिव्राजौ । परिव्राजः । तरुवृट् तरुवृड् । तरुवृश्चौ । तरुवृश्चः । यवभृट् यवभृड् । यवभृज्जौ । यवभृज्जः । इत्यादि । अन्येऽपि । भूभुक् बलिभुक् हुतभुक् वणिक् भिषक् अश्वयुक्प्रभृतयोपि जांतास्तत्र ( चोः कुः ) एवं ऋत्विक् ( दिशाम् ) इति कत्वं । ऋतुषु ऋतुं वा यजतीति ऋत्विक् । ऋत्विजौ । ऋत्विजः । डान्ताः अप्रसिद्धाः ॥

दकारांताः त्यद्तद्यद्एतद्शब्दाः । एतेषां ( त्यदादेष्टेरः स्यादौ ) इत्यकारे कृते सर्वत्र सर्वशब्दवत् रूपं ज्ञेयम् ( स्तः ) त्यदादेस्तकारस्य सौ परे सत्वं भवति । स्यः । त्यौ । त्ये । त्यं । त्यौ । त्यान् । त्येन । त्याभ्यां । त्यैः । त्यस्मै । इत्यादि । सः । तौ । ते । यः । यौ । ये । एषः । षत्वं । एतौ । एते [एतदोऽन्वादेशे द्वितीयाटौस्स्वेनो वा वक्तव्यः ] उक्तस्य पुनरुक्तिरन्वादेशः यथा अनेन बालेन व्याकरणमधीतमेनं छंदोऽध्यापय । एतं एनं । एतौ एनौ । एतान् एनान् । एतेन एनेन । एताभ्यां । एतैः । एतयोः एनयोः । एतेषां । एतस्मिन् । एतयोः एनयोः । एतेषु॥

दकारांतास्त्यदादयः शब्दास्तेषां ( त्यदादेष्टेरः स्यादौ ) इत्यकारे कृते सर्वत्र सर्वशब्दवत् । सौ तु विशेषः । सूत्रं ( स्तः ) स् १-१ । (हसे०) त् । ६-१ (स्त्रो०।)

त्यदादेस्तकारस्येति वृत्तिः सुगमा । अनेन सौ तस्य सः । शेषं सर्ववत् । न वरं । धेर-भावः । स्यः । त्यौ । त्ये । एवं तद्यद्एतद्शब्दाः । एतच्छब्दस्य सर्वत्र टेरत्वे कृते सौ च ( स्तः ) इति तस्य सत्वे च कृते । ( किला० स्रो० ) एषः । एतौ । एते । द्वितीयायां टौसोश्च विशेषः । एतद इति एतद्शब्दस्य अन्वादेशे सति उक्तस्य पुनः क-थनमन्वादेश उच्यते । यथा । एष राजा याति एनं पश्य । एष पठति एनं व्याकर-णं पाठय । अथैनं वेदमध्यापयेत्यन्वादेशः । तस्मिंश्च वाच्यमाने द्वितीयाटौस्सु द्विती-यायां वचनत्रयेपि टाइति तृतीयैकवचने ओसि षष्ठीसप्तमीद्विवचने वा विकल्पेन एना-देशस्तकारस्य वा नकार इत्यर्थः । अनेनोक्तवचनेषु वा एनादेशः । एतं एनं । एतौ एनौ । एतान् एनान् । एतेन एनेन । एतयोः एनयोः । २ । शेषं सुकरं । इति दांताः । अन्येपि बलभिद्दिविषद्सर्वविद्वेदाविद्सुहृद्प्रभृतयः । ठवखफांता अप्रसिद्धाः ॥

**छकारांतस्तत्वप्राछ्शब्दः । तत्वप्राट् तत्वप्राड् । तत्वप्राछौ । तत्वप्राछः । इत्यादि ॥**

छकारांतः तत्वप्राछ्शब्दः । व्याकरणांतरे तु ( छ्वोः शूडनुनासिके च ) इति छ-स्य शत्वं विधाय ततः ( छशषराजादेः षः ) इति षत्वे कृते ( षो डः । वावसाने ) सम्राड्वत् तत्वप्राट्शब्दः । शेषं सुकरं । छांतोऽयं ॥

**थकारांतः अग्निमथ्शब्दः तस्य ( वावसाने ) चपा जबाश्च । अग्निमत् अग्निमद् । संबोधनेऽप्येवं । अग्निमथौ । अग्निमथः । अग्निमथं । अग्निमथौ । अग्निमथः । अग्निमथा । अग्निमद्भ्यां इत्यादि ॥**

थकारांतो अग्निमथ्शब्दस्तस्य सौ धौ वा सिलोपे कृते ( वावसाने ) इति ( वर्ग्यो वर्ग्येण सवर्णः ) इति वचनात् थकारस्य वा तकारदकारौ । भकारादौ ( झबे जबाः ) थस्य दः स्वर० सुपि ( खसे च० ) थस्य तः । स्वरादौ स्वर० । एवं थांताः ॥

**चकारांतः प्रत्यच्शब्दः [ अचेः पंचसु नुमागमो वक्तव्यः ] प्रत्यन्च् सि इति स्थिते ( स्तोः श्चुभिः श्चुः ) इति चुत्वेन जकारः संयोगान्तस्य लोपः । ( चोः कुः ) चवर्गस्य कवर्गा-देशो भवति धातोर्झसे परे नाम्नश्च रसे पदांते च यथासंख्ये-न । प्रत्यङ् । प्रत्यञ्चौ । प्रत्यञ्चः । प्रत्यञ्चं । प्रत्यञ्चौ ( अंचेरलोपो दीर्घश्च ) अंचतेर्धातोरकारस्य लोपो भवति पूर्वस्य च दीर्घः**

**शसादौ स्वरे परे तद्धिते प्रत्यये ईपि ईकारे च । निमित्ताभावे नैमित्तिकस्याप्यभाव: प्रतीचः । प्रतीचा । प्रत्यग्भ्यां । प्रत्यग्भिः । एवं तिर्यंचप्रभृतयः । तिर्यङ् । तिर्यञ्चौ । तिर्यञ्चः । तिर्यञ्चं । तिर्यञ्चौ (तिरश्चादयः) तिरश्चादयो निपात्यंते शसादौ स्वरे परे तद्धिते ईपि ईकारे च । तिरश्चः । तिरश्चा । तिर्यग्भ्यां । तिर्य्यग्भिः । तिर्य्यक्षु । एवं उदङ् । उदञ्चौ । उदञ्चः । उदञ्चं । उदञ्चौ । उदच्शब्दस्य उदीच् निपात्यते शसादौ स्वरे परे तद्धित ईपि ईकारे च । उदीचः । उदीचा । समीचः । समीचा । इत्यादि ॥**

चकारांतः प्रत्यच्शब्दः । अंचु गतिपूजनयोः । अंच् प्रतिपूर्वः । क्विप्प्रत्ययः [ प्रतिपूर्वस्य अपूजार्थस्यांचतेर्नलोपो वक्तव्यः ] यद्वा नो लोपः ( इयं० ) स्वर० क्विपः सर्वापहारी लोपः । प्रत्यच् इति सिद्धं । तस्य पंचसु विशेषः ( अंचेः पंचसु ) इति अंचु गतिपूजनयोरित्यस्य धातोः पुंल्लिंगे स्यादिषु पंचसु वचनेषु परेषु नुम् इत्यागमो भवति । प्रत्यन्च्स् इति स्थिते ( स्तोः श्चुभिः श्चुः ) इति नस्य ञ् ( हसे० ) इति सेर्लोपः ( संयोगांतस्य ) इति चलोपः । सूत्रं ( चोः कुः ) चु ६–१ (ङिति । ङस्य) इत्यकारलोपः ( स्रो० ) कु १–१ ( स्रो० ) सिद्धं । चवर्गस्य० वृत्तिः सुगमा । न वरं । यथासंख्येनेति यथाक्रमेण चस्य कः छस्य खः जस्य गः झस्य घः ञस्य ङः इत्यर्थः । अनेन ञस्य ङ् । प्रत्यङ् । केचित्त्वत्र ( स्तोः श्चुभिः श्चुः ) इति न आद्रियंते । यतः ( संयोगांतस्य० ) इति चलोपे कृते निमित्ताभावे नैमित्तिकस्याप्यभावः इति पुनर्ञकारस्य नकारः एव ततः ( चोः कुः ) इत्यपि न भवति । किं तु प्रत्यन् इति सिध्यति । द्विवचनादौ नुमागमे कृते ( नश्चापदां० ) स्वर० । प्रत्यंचौ । यद्वा । प्रत्यञ्चौ । प्रत्यञ्चः । प्रत्यञ्चं । प्रत्यञ्चौ । शसादौ तु विशेषः । सूत्रं ( अंचेरलो० ) अंचि ५–१ ( ङिति । ङस्य ) इत्यलोपः ( स्रो० ) अस्य अकारस्य लुक् अलुक् १–१ ( हसे० नामिनो० ) दीर्घः १–१ ( स्रो० ) च १–१ ( अव्य० विसर्ज्ज० स्तो० ) अंचतेर्द्धातोः शसादौ स्वरे परे तद्धितसंबंधिनि प्रत्यये ईपि प्रत्यये च ( ईमौ ) इति सूत्रेण कृते ईकारे च परे अकारस्य लोपो भवति पूर्वस्य च दीर्घो भवति । तद्धिते प्रतीचीनः । प्रतीच्यः । ईपि प्रतीची । ईकारे प्रत्यक् । प्रतीची । प्रत्यंचि । अत्र तु शसादौ स्वरे अनेन प्रति अच् इति विश्लेषे कृते अकारलोपः । इति तिइत्यस्य दीर्घः ती । भकारादौ ( चोः कुः ) इति ककारे कृते ( झबे जबाः ) कस्य गः स्वर० सुपि ( चोः कुः । किलात्पः सः० । कपसंयोगे क्षः । ) शेषं कंठ्यं । पूजार्थे तु अं-

चतेर्नलोपो न । तेन प्रत्यङ् । प्रत्यञ्चौ । प्रत्यञ्चः । प्रत्यञ्चं । प्रत्यञ्चौ । प्रत्यञ्चः । प्रत्यञ्चा । प्रत्यग्भ्यां । प्रत्यग्भिः । प्रत्यञ्चे । इत्यादि । एवं प्राङ् । प्रांचौ । प्रांचः । प्रांचं । प्रांचौ । प्रांचः । प्रांचा । प्राङ्भ्यां । प्राङ्भिः । प्रांचे । प्राङ्भ्यां । प्राङ्भ्यः । गत्यर्थस्य तु शसादौ । प्राचः । प्राचा । तिर्यच्उदच्शब्दयोः पंचसु प्रत्यच्शब्दवत् । शसादौ तु विशेषः । सूत्रं ( तिरश्चादयः ) तिरश्च् आदिर्येषां ते तिरश्चादयः । १-३ । ( एओजसि । एअय् । ) स्वर० ( स्रो० ) तिरश्चादय इति तिर्यच्उदच्सध्र्यच्सम्यच्शब्दानां यथाक्रमं तिरश्च् उदीच् सध्रीच् समीच् इत्यादेशा निपात्यंते शसादौ स्वरे तद्धिते प्रत्यये ईपि ईकारे च । तद्धिते यथा तिरश्चीनः । ईपि तिरश्ची । ईकारे तिर्यक् । तिरश्ची । तिर्यंचि । अनेन शसादौ स्वरे परे तिर्यच्शब्दस्य तिरश्च् । उदच्शब्दस्य उदीच् । स्वर० । भकारादौ ( चोः कुः । झबे जबाः ) सुपि च ( चोः कुः । झिला० ) इत्यादि प्रत्यच्वत् । इत्यादयश्चांताः । टकारांताः अप्रसिद्धाः ॥

**तकारांतो मरुत्शब्दः ( वावसाने ) मरुत् मरुद् । मरुतौ । मरुतः । मरुतं । मरुतौ । मरुतः । मरुता । मरुद्भ्यां । मरुद्भिः । इत्यादि । एवमग्निचित्प्रभृतयः । अग्निचित् अग्निचिद् । अग्निचितौ । अग्निचितः । इत्यादि ॥**

तकारांतो मरुत्शब्दस्तस्य सौ धौ च सिलोपे कृते ( वावसाने ) तकारस्य दकारः भकारादौ ( झबे जबाः ) तस्य दः । स्वर० स्वरादौ ( सुपि च ) स्वर० एवं अग्निचित्प्रभृतयोऽपि साध्याः । अग्निं चिनोति इंधनैर्वर्द्धयतीति अग्निचित् ॥

**तकारांत उकारानुबंधो महत्शब्दः ( उगितो नुम् ) उकारानुबंधस्य ऋकारानुबंधस्य च नुमागमो भवति पुंसि विषये पंचसु परेषु । ( न्सम्महतोऽधौ दीर्घः शौ च ) न्संतस्य अप्शब्दस्य च महत्शब्दस्य च दीर्घो भवति पंचसु धिवर्जितेषु शौ परे च । महान् । महांतौ । महांतः । हे महन् । महांतं । महांतौ । महतः । महता । महद्भ्यां । महद्भिः । इत्यादि ॥**

तकारांत उकारानुबंधो महच्छब्दस्तस्य पंचसु विशेषः । मह पूजायां ( द्रुहिमहिपृषिभ्यः शतृ ) एभ्यः शतृप्रत्ययो भवति । ऋकारानुबंधित्वं तु चिंत्यं । मह्यते इति महत् । कार्यार्थमुच्चरितस्य वर्णस्यानुबंधः इति संज्ञाः । यथा उच्चरितप्रध्वंसिनो ह्यनुबंधाः । सूत्रम् ( उगितः० ) उश्च ऋश्च वृ वृ इत् यस्य स उगित् तस्य उगितः ६-१ । स्वर० ( स्रो० ) नुम् १-१ ( हसे० हबे । उओ ) सिद्धं । उकारानुबंधस्य वतुप्रत्ययादेः

ऋकारानुबंधस्य शतृप्रत्ययादेः नुमागमो भवति पुंसि पुँल्लिंगे पंचसु वचनेषु परेषु शौ च। इति नपुंसके जस्शसोः स्थाने जाते शौ परे अनेन पंचसु स्यादिषु तकारात् पूर्वं न। सूत्रं ( न्सम्महतोऽधौ दीर्घः शौ च ) न्स् च अप् च महच्च न्सम्महत्तस्य ६–१ स्वर० न्सम् अग्रे महत् ( अमे अमा वा ) पस्य मः। स्वर०। न धिः अधिस्तस्मिन् अधौ ७–१ ( ङेरौ० ) टिलोपः। स्व० ( अतो० ङओ। एदो० ) दीर्घ १–१ ( स्रो० ) शि ७–१ ङेरौ० ( टिलोपः ) स्वर० च १–१ ( अव्य० ) पंचपदं न्संतस्येति सुहिन्स्शब्दं विहाय नुमागमसहितसकारांतस्य तथा अप्शब्दस्य जलवाचिनो नित्यं बहुवचनांतस्य तथा महत्शब्दस्य उकारानुबंधस्य पुंसि पंचसु वचनेषु धिवर्जितेषु नपुंसके शौ च दीर्घो भवति ह्रस्वदीर्घप्लुता विधीयमानाः स्वरस्थाने भवंतीति न्सादीनां व्यंजनसन्निकृष्टस्य स्वरस्य दीर्घो भवतीत्यर्थः। अप्शब्दो बहुत्वे एव। तत्र असमासांतस्य जासि दीर्घो नान्यत्र समासांतस्य। पंचस्वेव इयं विवक्षा। तथा। शोभना आपो यत्र स स्वाप् देशः। स्वाब् स्वाप्। स्वापौ स्वापः। स्वापं। स्वापौ। इति नपुंसके शौ स्वप् स्वपी स्वांपि सरांसि। इति अनेन धिवर्जितेषु पंचसु दीर्घः। धौ तु नुमागम एव न दीर्घः ( हसे० संयोगांतस्य० ) इति सौ धौ च तकारस्य लोपः। शेषेषु ( नश्चापदांते झसे ) शसादौ। स्वर०। भकारादौ ( झबे जबाः। ) स्वर० शेषं सुगमं। भा दीप्तौ। भातेर्डवतुः। यतः भातेस्तु। भवतुः परः। भवान् पूज्ये युष्मदर्थे। इति॥

**उकारानुबंधो भवच्छब्दः ( अत्वसोः सौ ) अत्वंतस्यासंतस्य च दीर्घो भवति धिवर्जिते सौ च परे। भवान्। भवंतौ। भवंतः। हे भवन्। भवंतं। भवंतौ। भवतः। भवता। भवद्भ्यां। भवद्भिरित्यादि। ऋकारानुबंधः पचत्शब्दः। तस्य नुमागम एव न दीर्घो भवति। पचन्। पचंतौ। पचंतः। पचंतं। पचंतौ। पचतः। पचता। पचद्भ्यामित्यादि। एवं ऋकारानुबंधो भवत्शब्दः॥**

उकारानुबंधो भवतशब्दस्तस्य पंचसु ( ञितो नुम् ) इति नुमागमः। सूत्रं। ( अत्वसोः सौ )। अतुश्च अस् च अत्वसौ तयोः अत्वसोः। ६–२ स्व०( स्रो० ) सि ७–१ ( ङेरौ० ) सिद्धं। अत्वंतस्येति उकारानुबंधस्य असंतस्येति नुमागमरहिताऽसंत-[illegible] धिवर्जिते सौ परे दीर्घो भवति। अनेन सौ दीर्घो भवति। न धौ धिवर्जित [illegible] धौ ( हसे०। संयो० ) हे भवन्। पक्षे हे भोः। अन्यत्र ( नश्चा- [illegible]। भकारादौ ( झबे जबाः ) शेषं सुकरं। एवं अष्ठीवत्चक्रीवत- [illegible]ारानुबंधो भवत्शब्दः। भू ( शतृशानौ तितवक्रियायां ) इति श-

शप्रत्ययः। सः अत् ( अप्कर्त्तरि गुणः। ओ अव्। ) स्वर० भवत् ( सुपि च ) इति तस्य ( ऋितो नुम् ) इति नुमागमे कृते एव स्यात्। परं अत्वंताभावात् ( अत्वसोः सौ ) इति दीर्घत्वं न। शेषं सुगमम्। एवं पचत्शब्दोपि रित् ऋकारानुबंध इत्यर्थः। एवं अन्येपि शतृप्रत्ययांता ऋकारानुबंधा ज्ञेयाः। इति तांताः। कपांता अप्रसिद्धाः॥

शकारांतो विश्शब्दः ( छशषराजादेः षः ) इति षत्वं डत्वं च ( वावसाने ) चपा जबाश्च। विट् विड्। विशौ। विशः। इत्यादि। षकारान्तः षष्शब्दः नित्यं बहुवचनांतस्त्रिषु सरूपः ( जस्शसोर्लुक्। षो डः ) षट् षड्। षड्भिः। षड्भ्यः। २। ( ष्णः ) इति नुट्। षड् नाम् इति स्थिते॥ ( ड्णनः ) षांतसंख्यासंबंधिनो डकारस्य णत्वं भवति नामि परे। षण्णां। षट्सु [ क्वचिदपदान्ते पदांतताश्रयणीया ] ( दोषां रः। ) दोषसजुष्आशिष्हविष्प्रभृतीनां षकारस्य रेफो भवति रसे परे पदांते च। दोः। दोषौ। दोषः। दोषं। दोषौ। [ शसादौ स्वरे परे नांतता वा वक्तव्या ] दोष्णः दोषः। दोष्णा दोषा। दोर्भ्यां। दोर्भिः। दोष्णे दोषे। दोर्भ्यां। दोर्भ्यः। दोष्णः दोषः। दोर्भ्यां। दोर्भ्यः। दोष्णः दोषः। दोष्णोः दोषोः। दोष्णां दोषां। दोष्णि दोषि। दोष्णोः दोषोः। दोर्षु। सजूः। सजुषौ। सजुषः। सजुषं। सजुषौ। सजुषः[ सजुषाशिषो रसे पदांते दीर्घो वक्तव्यः ]॥

शकारांतो विश्शब्दस्तस्य ( छशषरा० ) इति षत्वे कृते ( षो डः। वावसाने० ) स्वरादौ। स्वर०। सुपि ( खसे च० ) सम्राज्शब्दवत्। विट् विड्। विशौ। विशः इत्यादीनि रूपाणि। विट्मनुष्यो वैश्यश्च। इत्यादयः शांताः। षकारांतः षष्शब्दो नित्यं बहुवचनांतस्त्रिषु लिंगेषु सदृशरूपः ( जश्शसोर्लुक्। षो डः। वावसाने ) षट् षड् पुनरपि। षट् षड्। भकारादौ ( षो डः ) इति डत्वे कृते स्वर० आमि ( ष्णः ) इति नुडागमः ( षो डः ) इति डत्वं। षड् नाम् इति स्थिते सति सूत्रं ( ड्णनः ) ड् ६-१ ( सांके० ) ण् १-१ ( हसे० ) न् ६-१ ( स्त्रो० ) संख्या० वृत्तिः कंठ्या। अनेन नामि परे डकारस्य णकारः ( ष्टुभिः ष्टुः। ) स्वर० सुपि ( षोडः। खसे च० ) ततः टकारसकारयोगे ( ष्टुभिः ष्टुः। ) इति प्राप्तौ ( टोरंत्यात् ) इति सूत्रेण ( ष्टुभिः ष्टुः ) इति स-

स्य षत्वनिषेधः । ननु अत्र पदांतत्वाभावात् टोरंत्यादिति सूत्रं कथं संभवति तत्राह क्वचिदिति । क्वचित्प्रयोगांतरे अपदांतेपि पदांतता आश्रयणीया ग्रहणीया वक्तव्येति भावः । दोष्शब्दो भुजार्थवाचकस्तस्य भेदः । सूत्रं दोष् ६-३ स्वर० ( मोनु० ) एकपदमिदं सूत्रं । अथवा ( दोषां रः ) इति द्विपदं । दोष्सजुष्आशिष्हविष्आयुष्सर्पिष्धनुष्ज्योतिष्प्रभृतिशब्दानां षकारस्य रसे परे पदांते च रेफो भवति सकारस्थाने जातस्य षकारस्येति व्याख्येयं । अनेन रसे पदांते च रेफः । सौ धौ च ( हसे० स्रो० ) द्विवचनादौ । स्वर० । दोः । दोषौ । दोषः । दोषं । दोषौ । शसादौ तु विशेषः [ शसादौ स्वरे परे नांतता वा वक्तव्या ] अस्यार्थः । दोष्शब्दस्य शसादौ स्वरे परे नांतत्वं भवति वा विकल्पेन अंते नकारागमो भवतीत्यर्थः । दोषन् इति स्थिते ( ष्रुन्नो० ) स्वर० । दोष्णः दोषः । दोष्णा दोषा । भकारादौ ( दोषां रः ) जल० । दोर्भ्यां । दोर्भिः । यद्वा ( दोषां रः । राद्यपो० झबे जबाः ) स्वर० दोर्भ्यां । दोर्भिरित्यादि । केचित्तु शसादावनंतता वा वक्तव्या इत्येवं पठंति । स्वरे इति पदं न पठंति । तन्मते स्वरादौ हसादौ च सर्वत्र विकल्पेन अन् आगमे कृते स्वरादौ ( अल्लोपः स्वरे । ष्रुन्नो० ) स्वर० द्वितीयपक्षे केवलं । स्वर० । दोष्णः दोषः । दोष्णा दोषा । भकारादौ एकत्र अन्आगमे कृते स्वर० ( नाम्नो० ) दोषभ्यां । द्वितीये ( दोषां रः । ) जल० दोर्भ्यां । एवं दोषभिः दोर्भिः । दोषे ( स्व० ) दोष्णे । शसादावनंतता । स्वर० । ततो अल्लोपः स्वर० ( ष्रुनो० ) स्व० । दोषभ्यां दोर्भ्यां । दोषभ्यः दोर्भ्यः । दोष्णः दोषः । दोषभ्यां दोर्भ्यां । दोषभ्यः दोर्भ्यः । दोष्णः दोषः । दोष्णोः दोषोः । दोष्णां दोषां । ( वेङ्योः ) दोष्णि दोषणि । दोष्णोः दोषोः । सुपि अनंतत्वे कृते ( नाम्नो० ) दोषसु । पक्षे ( दोषां रः ) इति रत्वे ( क्विला० ) दोर्षु । केचित्तु ( दोषां रः । स्रो० । विसर्ज्ज० ) दोष्षु इत्यपि साधयंति केचित्तु दोःषु इत्यपि पठंति । ततो यथासंभवं साध्यः दोष्शब्दः पुंक्लीबलिंगः । क्लीबे तु दोः । दोषी । दोंषि । जुषी प्रीतिसेवनयोः । जोषणं जुट् मिलनं प्रीतिः । सह तेन वर्त्तते इति सजूर्मित्रं [ सजुषाशिषो रसे पदांते दीर्घो वक्तव्यः । ] इति केचिन्नेच्छंति । ( दोषां रः ) रत्वं विधाय ( य्वोर्विहसे ) इत्यनेनैव सिद्धत्वात् । इति षांताः ॥

सकारांतः पुंस्शब्दः ( पुंसोऽसुङ् ) पुंस्शब्दस्य पंचसु परेषु असुङादेशो भवति । ङकारोऽत्यादेशार्थः । उकारो नुम्विधानार्थः ( स्वरे मः ) अनुस्वारस्य मकारो भवति स्वरे परे पुमस् सि इति स्थिते ( ञितो नुम् ) इति नुमागमः ( न्सम्महतोऽधौ दीर्घः शौ च ) संय्योगांतस्य लोपः ( हसे० )

इति सेर्लोपः । संयोगांतस्य लोपः । पुमान् । पुमांसौ । पुमांसः । हे पुमन् । पुमांसं । पुमांसौ । पुंसः । पुंसा । पुंभ्यां । पुंभिः ॥

सकारांतः पुंस्शब्दः । पुनातीति पुमान् । ( पुनातेः सुप् नुम् च ) इति सुप्प्रत्ययो नुमागमश्च । प्रादेर्ह्रस्वः । अथवा ( पातेर्डुम्सुरिमन् ) इति डुम्स्प्रत्ययः । डित्त्वाट्टिलोपः । पुम्स्शब्दस्य पंचसु विशेषः । सूत्रं ( पुंसोऽसुङ् ) पुंस् ६-१ स्वर० ( स्त्रो० ) असुङ् १-१ ( हसे०अतोत्युः । उओ । एदो० ) पुम्स्शब्दस्य पंचसु स्यादिषु परेषु असुङ् इत्ययमादेशो भवति । ङकारोंऽत्यादेशार्थः । उकार उच्चारणार्थः । अनेनांतस्य सकारस्य अस् इत्यादेशः । पुमस् इति स्थिते ( ञितो नुम् ) इति नुमागमः । पंचसु ( न्सम्महतः० ) इति धिवर्ज्जमन्यत्र दीर्घः । सौ धौ च (हसे०) इति सिलोपः ( संयोगांतस्य० ) इति सलोपः । अग्रे द्वितीयाद्वित्वं यावत् ( नश्चा० )स्व० । पुमान् । पुमांसौ । पुमांसः । हे पुमन् । हे पुमांसौ । हे पुमांसः । पुमांसौ । शसादौ ( नश्चा० ) स्व० । पुंसः । पुंसा । भकारादौ ( संयोगांतस्य० नश्चा० ) एवं सुपि ( संयोगां० नश्चा० ) पुंसु ॥

( असंभवे पुंसः कक्सौ ) असंभवेर्थे वाच्ये सति पुंस्शब्दस्य कगागमो भवति सौ परे । ( स्कोराद्योश्च ) इति सकारलोपः । कषसंयोगे क्षः । पुंक्षु । एवं विद्वान् । विद्वांसौ । विद्वांसः । हे विद्वन् । विद्वांसं । विद्वांसौ ( वसोर्व उः ) वसोः संबंधी वकार उत्वं प्राप्नोति शसादौ स्वरे परे ताद्धिते ईपि ईकारे च । विदुषः । विदुषा ( वसां रसे ) विद्वद्भ्यां । विद्वद्भिः । विद्वत्सु । इत्यादि॥

अथ रूपांतरं साधयति । असंभवे वैदिकप्रयोगे असंभवो नाम वेदांतैकवेद्यस्यात्मनो बहुत्वाऽसंभवः । न विद्यते आत्मनो ब्रह्मणो बहुत्वसंभवो यत्रासौ असंभवः । कुतः "एकमेवाद्वितीयं ब्रह्म नेह नानास्ति किंचन" इति वेदांतशास्त्रेण वेद्यस्य ज्ञेयस्य आत्मनो बहुत्वाऽसंभवः । अथवा नास्ति संभवो बुद्धेः सूत्रादेश्च यत्र सोऽसंभवस्तस्मिन् वाच्ये सति पुंस्शब्दस्य सौ इति सुपि परे कगागमो भवति । अनेन पुंस् अग्रे कक् । कित्त्वादंते ( स्कोराद्योश्च ) इति सलोपः ( किला० कषसंयोगे क्षः ) पुंक्षु इति सिद्धं । परमपुरुषे पुंक्षु वैदिकप्रयोगोयं लौकिकेषु पुरुषेषु पुंसु । विद्वस्शब्दस्य पंचसु पुंस्वत् (ञितो नुम् । न्सम्महतो धौ दीर्घः० । संयो० ) विद्वान् । विद्वांसौ । विद्वांसः । हे विद्वन् । विद्वांसं । विद्वांसौ । शसादौ तु विशेषः । सूत्रं (वसोर्व उः) वसु ६-१ (ङिति। ङस्य । स्त्रो० ) व १-१ ( स्त्रो० नामि० ) जल० उ १-१ ( सांके० आदबे० ) वसोरिति क्वसुकानौ णबेवत् । ( विदेर्वा वसुः ) इत्यादिसूत्रोत्पन्नो यो वसुप्रत्ययस्तस्य

संबंधी वकारः सस्वरः उत्वं प्राप्नोति शसादौ स्वरे तद्धिते यण्प्रत्यये परे ईपि ईकारे च परे । तद्धिते वैदुष्यं । ईपि च विदुषी । अत्र अनेन शसादौ स्वरे परे सर्वत्र द्व इत्यस्य दुः ( क्विला० ) स्व० हसादौ ( वसां रसे ) इति सस्य दत्वे कृते भकारादौ । स्वर० । सुपि ( खसे० ) दस्य तः स्वर० । एवं तस्थिवस्शब्दः । तस्थौ इति तस्थिवान् । ष्ठा गतिनिवृत्तौ । ( आदेः ष्णः स्नः ) स्था क्वसुप्रत्ययः वस् च णबेवत् । तेन द्वित्वं ह्रस्वः ( शसात् खपा० ) इति पूर्वसस्य लोपः । ( झभानां जबचपाः ) इति थस्य तः । ( स्थामि ) इति आकारस्य इकारः । तास्थिवस् इति जातं । ( स्यादिः ) तास्थिवान् । तास्थिवांसौ । तास्थिवांसः । तास्थिवांसं । तास्थिवांसौ । शसादौ स्वरे परे ( वसोर्व उः ) इति वस्य उत्वे कृते निमित्ताभावे नैमित्तिकस्याप्यभावः इति इकारस्य आकार एव । ततः ( आतोऽनपि ) इत्याकारलोपः स्वर० ( क्विला० ) तस्थुषः । तस्थुषा । तास्थिवद्भ्यामित्यादि । एवं गतः इति जाग्मिवान् । जग्मिवांसौ । जग्मिवांसः । जग्मिवांसं । जग्मिवांसौ ( गमां स्वरे ) जग्मुषः । जग्मुषा । जग्मिवद्भ्यामित्यादि । अथवा जगन्वस्शब्दः । गम् वसुप्रत्ययः द्वित्वं ( मो नो धातोः ) जगामेति जगन्वान् । शसादौ स्वरे निमित्ताभावे नैमित्तिकस्याप्यभावः इति नकारस्य मकार एव (गमां स्वरे) जग्मुषः । जग्मुषा । जगन्वद्भ्यां । जगन्वद्भिरित्यादि । एवं पेचिवान् । पेचिवांसौ । पेचिवांसः । पेचिवांसं । पेचिवांसौ । पेचुषः । पेचुषा । पेचिवद्भ्यां । पेचिवद्भिरित्यादि । उषास्रंसपर्णध्वंसादीनां तु रसे पदांते च ( वसां रसे ) इति दत्वं । स्वरादौ स्वर० । उषास्रत् । उषास्रसौ । उषास्रसः । उषास्रसं । उषास्रसौ । उषास्रसः । उषास्रसा । उषास्रद्भ्यां । उषास्रद्भिः । उषास्रत्सु । एवं पर्णध्वत् । पर्णध्वसौ । पर्णध्वसः । इत्यादि ॥

**सुवचस्शब्दे तु ( अत्वसोः सौ ) इति दीर्घः । सुवचाः । सुवचसौ । सुवचसः । हे सुवचः । सुवचसं । सुवचसौ । सुवचसः । सुवचसा ( स्रोर्विसर्गः । हबे ) उत्वं ( उओ ) सुवचोभ्यां । सुवचोभिः । इत्यादि ॥ एवं चंद्रमस्शब्दः ॥ चन्द्रमाः । चन्द्रमसौ । चन्द्रमसः । हेचन्द्रमः । चन्द्रमसं । चन्द्रमोभ्यां । चन्द्रमस्सु । इत्यादि ॥**

सकारांतः सुवचस्शब्दः । वच् परिभाषणे । सुपूर्वः ( वचादेरस् । स्वर० ) नामत्वात्स्यादयः । ततः सौ परे ( अत्वसोः सौ ) इति दीर्घः ( हसे० स्रो० ) धौ ( हसे पः० स्रो० ) हे सुवचः । स्वरादौ सर्वत्र ( सुपि च ) स्व० । भकारादौ ( स्रो० हबे० उओ ) शेषं सुगमं । सुपि । स्वर० । एवं चंद्रमस्शब्दः । चंद्रमाः । चंद्रमसौ । चंद्रमसः । हे चंद्रमः । चंद्रमोभ्यां । चंद्रमस्सु । एवं वेधाः । दुर्मेधाः । इत्यादि ॥ एवं प्रचेतस्जातवेदसउच्चैःश्रवसस्सुप्रजसस्सुतेजसविडौजसप्रभृतयः साध्याः ॥

उशनसशब्दस्य विशेषः । ( उशनसां ) उशनस् पुरुदंसस् अनेहस् इत्येतेषां सेरधेर्डा भवति । डकारष्टिलोपार्थः । उशना । उशनसौ । उशनसः । उशनसं । उशनसौ । उशनसः । [ उशनसो धौ सांतता नांतता अदंतता च वक्तव्या ] हे उशनः हे उशनन् हे उशन । हे उशनसौ । हे उशनसः ॥

उशनसादीनां सौ विशेषः । सूत्रं उशनस् ६-३ स्व० ( मोनु० ) उशनस्पुरुदंसस् अनेहस् इत्येतेषां शब्दानां धिवर्जितस्य सेर्डा भवति अनेन सेर्डा । डकारष्टिलोपार्थः । ( डिति टेः ) इति टिलोपः स्वर० शेषं द्वित्वादौ सुवचस्वत् । उशनसौ । धौ विशेषमाह । [ उशनसः० ] इति । उशनस्शब्दस्य धिविषये नांतता अंत्यसकारस्य नकारः अदंतता अकारांतता च सकारस्य लोपो भवतीत्यर्थः । चकारात् तृतीये तु सांत एव तिष्ठतीति धौ रूपत्रयं । यतः "संबोधने तूशनसस्त्रिरूपं" इति । एकत्र ( हसे० स्रो० ) द्वितीयरूपे सस्य नः ( हसे० ) तृतीये तु अदंतता वक्तव्येति सलोपः ( समाना० ) इति धेर्लोपः । हे उशनः हे उशनन् हे उशन इति ज्ञेयं । उशनस् भ्यां इत्यत्र ( स्रो० हबे । उओ ) उशनोभ्यां उशनोभिरित्यादि । उशना शुक्रः । एवं पुरुदंसस्अनेहस्प्रभृतयः । पुरुदंसा । पुरुदंससौ । पुरुदंससः । पुरुदंसा इंद्रः । अनेहा । अनेहसौ । अनेहसः । इत्यादि । अनेहा कालः वर्षमासदिनादिः ॥

अदस्शब्दस्य भेदः ( त्यदादेष्टेरः स्यादौ ) इति सर्वत्राकारः । अदस् सि इति स्थिते ( सौ सः ) सौ परे अदसो दकारः सो भवति । ( सेरौ ) अदसः सेरौकारादेशो भवति । असौ । द्विवचने अद औ इति स्थिते दस्य मः ( मादू ) उश्च ऊश्च ऊ अदसो मकारात्परस्य ह्रस्वस्य ह्रस्वउकारो भवति दीर्घस्य च दीर्घ ऊकारो भवति । अमू । बहुवचने सर्वादित्वात् ( जसी । अइए ) अमे इति स्थिते ( एरी बहुत्वे ) बहुत्वे सत्यदस एकारस्य ईकारादेशो भवति । अमी । अमुं । अमू । अमून् । तृतीयादौ मत्वे उत्वे च कृते ( टा नास्त्रियां ) अमुना । द्विवचने ( आद्वि ) इत्यात्वं पश्चादूकारः । अमूभ्यां । अमीभिः । अमुष्मै । अमूभ्यां । अमीभ्यः । अमुष्मात् । अमूभ्यां । अमी-

**भ्यः । अमुष्य । ओसि एत्वे कृते अयादेशे च कृते पश्चादु-कारः । अमुयोः । अमीषां । अमुष्मिन् । अमुयोः । अमीषु । ( सामान्ये अदसः कः स्यादिवच्च ) अमुकः । अमुकौ । अमु-के । पुंल्लिंगे सर्ववत् ॥ इति हसांतपुँल्लिंगप्रक्रिया ॥**

अदस्शब्दस्य सकारांतस्यापि विशेषः । तस्य ( त्यदादेष्टेः० ) सर्वत्राकारे कृते अद सि इति स्थिते । सूत्रं ( सौ सः ) सि ७-१ ( ङेरौ० ) टिलोपः । स १-१ ( स्रो० ) अदसो दकारस्य सौ परे सो भवति । अनेन दस्य सः । अस इति स्थिते सूत्रं सि ६-१ ( ङिति । ङस्य । स्रो० ) औ १-१ ( सांके० नामिनो रः । ) स्वर० अदसः संबंधिनः सेः औकारो भवति । अनेन सिस्थाने औ ( ओऔ औ ) असौ इति सिद्धं । द्विवचनादौ ( त्यदादेष्टेः० ) इति सर्वत्राकारे कृते ( दस्य मः ) अम औ इति स्थिते ( ओऔ औ ) सूत्रं म ५-१ ( ङसिरत् । सवर्णे० ) उश्च ऊश्च ऊ १-१ ( सांके० चपा अबे० ) सिद्धं । अदसो मकारात्परस्य ह्रस्वस्य स्वरस्य ह्रस्व उकारो भवति दीर्घस्य च दीर्घ ऊकारो भवति । अनेन अमौ इत्यस्य औकारस्य दीर्घत्वादूकारः । अत्र पूर्वं विभक्तिकार्यं पश्चात् ( मादू ) । टास्थाने तु पूर्वं ( मादू ) पश्चाद्विभक्तिकार्यं इति विवेकः । अमू । बहुवचने सर्वादित्वात् ( जसी । अइए ) अमे इति स्थिते सूत्रं ए ६-१ ( स्रो० ) ई १-१ सांके० ( नामि० ) स्व० बहुत्वे ७-१ ( अइए ) बहुत्वे बहुवचने सति अदस्शब्दस्य मकारात्परस्य एकारस्य ईकारो भवति । अनेन एकारस्य ईकारः । अमी । मकारात्परस्येति चेन्न व्याक्रियते तदा अमुकः । अमुकौ । अमुके । इति न सिध्यति । अमि ( अम्श० मादू० ) इति अकारस्य उकारः ( मोनु० ) अमुम् इति सिद्धं । द्विवचनं प्रथमाद्विवचनवत् । बहुत्वे ( अम्श० । सो नः पुंसः । शसि । मादू ) । अमून् इति सिद्धं । टाविषये ( मादू ) अस्य उः अमु ततः ( टानास्त्रियां ) अमुना । द्विवचने ( अद्भि ) इत्यात्वं । पश्चात् ( मादू ) इत्याकारस्य दीर्घत्वादूकारः । अमूभ्यामिति सिद्धं । एवं चतुर्थीपंचमीद्वित्वेऽपि । तृतीयाबहुवचने ( भिस्भिस् ) इति वचनात् ( एस्भि बहुत्वे । एरी बहुत्वे ) अमीभिः । एवं । ४-३ । ५-३ । चतुर्थ्येकवचने ( सर्वादेः स्मट् । मादू । क्लिा० । एऐऐ ) अमुष्मै । पंचम्येकवचने ( ङसिरत् । अतः० ) इति स्मडागमः ( सवर्णे० । मादू । क्लिा० ) अमुष्मात् । षष्ठ्येकवचने ( ङस्य । मादू । क्लिा० ) अमुष्य । ६-२ । ७-२ । ओसि अकारस्य एकारः ( ए अय् । मादू । ) स्वर० अमुयोः । आमि ( सुडामः । एस्भि० एरी बहुत्वे० क्लिा० ) अमीषां । ७-१ । ( ङि स्मिन् । मादू । क्लिा० ) अमुष्मिन् । सुपि ( एस्भि० एरी बहुत्वे । क्लिा० ) अमीषु । त्यदादित्वाद्धेरभावः । संबोधनं न भवतीत्यर्थः । पुनर्विशेषमाह । सामान्य इति सामान्येऽर्थे विशेषकथने अज्ञानाद्यर्थे अदस्-

शब्दस्य कः प्रत्ययो भवति । स च स्यादिवत् ज्ञेयः । स्यादौ परे सति यत्कार्यं भवति तत्कार्यं कप्रत्यये परे भवतीत्यर्थः । तेन ( त्यदा० दस्य मः । मादू ) इति भवति । स्यादिवच्चेति चकारात्प्रथमैकवचने असकौ इत्यपि रूपं भवति । पुंसि स्त्रियां च अदसः कप्रत्ययः । स्यादित्वात् ( त्यदादेष्टेरः स्यादौ । दस्य मः । मादू ) अमुक इति सिद्धं । ततः स्यादयः । प्रक्रिया सर्वशब्दवत् ॥ इति हसांतपुंल्लिंगसाधनं समाप्तं ॥

**अथ हसांताः स्त्रीलिंगाः ॥ हकारांत उपानह्शब्दः ( नहो धः ) नहो हकारस्य धकारादेशो भवति रसे परे पदांते च ( वाव-साने ) इति तत्वं दत्वं च । उपानत् उपानद् । उपानहौ । उपा-नहः । हे उपानद् । हे उपानहौ । हे उपानहः । उपानहं । उपा-नहौ । उपानहः । उपानहा । उपानद्भ्यां । उपानद्भिः । इत्यादि ॥**

अथ हसांतस्त्रीलिंगे किंचिच्छब्दसाधनं लिख्यते । हकारांतः उपानह्शब्दः पादत्रा-णार्थवाचकः तस्य स्वरादौ स्वर० ( हो ढः ) इति ढत्वप्राप्तौ तदपवादार्थं रसे पदांते च विशेषमाह । सूत्रं । नह् ६–१ स्व० (स्त्रो० हवे । उओ) ध १–१ ( स्त्रो० ) सिद्धं । वृत्तिः कंठ्या । अनेन रसे पदांते च हस्य धः । सौ धौ च धत्वे कृते ( हसे० वावसाने० ) धकारस्य वा तकारदकारौ । भकारादौ ( नहो धः । झबे ज० ) धस्य दः स्व० सुपि ( नहो धः । खसे० ) धस्य तः स्व० शेषं कठचम् । गोधुक्प्रभृतयः पुंल्लिंगवत् ज्ञेयाः । उष्णिक् उष्णिग् । उष्णिहौ । उष्णिहः । उत् ऊर्ध्वं स्निह्यति क्षरतीति वा उष्णिक् यवागूः ( दिशाम् ) इति कत्वं । इति हांताः । यकारांता अप्रसिद्धाः ॥

**वकारांतो दिव्शब्दः । ( दिव औ ) दिव्शब्दस्य औकारादे-शो भवति सौ परे । द्यौः । दिवौ । दिवः । दिव् अम् इति स्थि-ते ( वाम्या ) दिवो वकारस्य अमि परे वा आ भवति । द्यां दिवं । दिवौ । दिवः । दिवा ( उ रसे ) दिवो वकारस्य उकारो भवति रसे परे । द्युभ्यां । द्युभिः । दिवे । द्युभ्यां । द्युभ्यः । इत्यादि ॥**

वकारांतो दिव्शब्दः स्वर्गआकाशार्थवाचकः तस्य नामसंज्ञायां स्यादयः । दिव् स् इति स्थिते । सूत्रं । दिव् ६–१ स्वर० ( स्त्रो० ) औ १–१ सांके० ( आदबे० ) सि ७–१ ( ङेरौ० ) टिलोपः स्व० दिव् इति षष्ठ्या निर्दिष्टत्वाद्दिव्शब्दसंबंधिनो वकारस्य औकारो भवति सौ परे । अनेन सौ धौ वस्य औकारः ( इ यं० ) स्व० ( स्त्रो० ) एवं हे द्यौः । वर्णविधौ नेदमिति यदादेशस्तद्वद्भवतीति सिलोपो न । द्वित्वे बहुत्वे च स्व० अमि विशेषः । सूत्रं ( वाम्या ) वा ३–१ ( अव्य० ) अम् ७–१ स्व० ( सवर्णे० )

आ १-१ ( सांके० इ यं० ) त्रिपदं । दिवो वकारस्य अमि परे वा आत्वं भवति । अनेन अम्विषये वकारस्य आकारः ( इ यं स्वरे ) स्वर० द्यां । पक्षे दिवं । अग्रे स्वरादौ सर्वत्र स्वर० हसादौ तु विशेषः ॥ सूत्रं । उ १-१ ( सांके० ) रसे ७-१ ( अइ ए ) दिवो वकारस्य रसे परे उकारो भवति । यद्वा ( उ रसे ) उ १-१ उ ७-१ रसे ७-१ इति त्रिपदं सूत्रं पठंति । तेन रसे परे उवर्णेपि परे उकारो भवति । यथा द्यूषितः दिवि उषितः द्यूषितः । एवं दिवं ऊर्णोति आच्छादयतीति द्यूर्णुत् । अनेन भकारादौ सुपि च वस्य उकारः ( इ यं स्वरे ) सुपि ( उ रसे ) ततः ( क्विलात्षः सः० ) इति वांताः॥

**रकारांतश्चतुरशब्दो नित्यं बहुवचनांतः [ त्रिचतुरोः स्त्रियां तिसृचतसृवत् ] स्त्रियां वर्त्तमानयोस्त्रिचतुरशब्दयोस्तिसृचतसृ इत्येतावादेशो भवतः स्यादौ विभक्तौ परतः ऋकारश्च ऋकारवत् । ततः ( स्तुरार् ) इत्यार् । इत्यादिसूत्रैः ऋदंतशब्दकार्यं न भवति । ऋकारत्वात् किं तु ( ऋ रं ) भवति । तिस्रः । तिस्रः । चतस्रः । चतस्रः । तिसृभिः । चतसृभिः । तिसृभ्यः । २ । चतसृभ्यः । २ । ( न तिसृ चतसृ नामि- दीर्घत्वं ) तिसृचतसृइत्येतयोर्दीर्घो न भवति नामि परे छंदसि वा । तिसृणां । चतसृणां । छन्दसि तु वा भवति । तिसॄणां । चतसॄणां । तिसृषु । चतसृषु ॥**

रेफांतश्चतुरशब्दो नित्यं बहुवचनांतस्तस्य च स्त्रियां विशेषः । सूत्रं ( त्रिच० )त्रिश्च चतुर्च त्रिचतुरौ तयोः ६-२ स्वर० ( स्त्री० ) स्त्री ७-१ ( स्त्रियां योः । स्त्रीभ्रुवोः । ङितामट् । ) स्व० ( सव० ) तिसृ च चतसृ च तिसृचतसृ १-२ ( सांके० ) ऋवत् १-१ ( अव्य०सवर्णे० ) सिद्धमिदं सूत्रं । स्त्रियां वर्त्तमानौ यौ त्रिचतुरशब्दौ तयोस्तिसृचतसृ इत्येतावादेशौ क्रमात् भवतः त्रिशब्दस्य तिसृ चतुरशब्दस्य चतसृ ऋकारश्च ऋकारवत् ऋकारेण तुल्यो ज्ञेयः । ततो दीर्घत्वाज्जसि ( स्तुरार् ) इति सूत्रेण आर् न भवति ( पंचसु ) इत्यर् । शसि ( अम्शा० ) इत्यकारलोपो न । सप्तस्वपि बहुवचनेषु त्रिशब्दस्य तिसृआदेशः चतुरशब्दस्य चतसृ । जसि शसि च ( ऋ रं० )स्व० ( स्त्री० ) आमि नुडागमे कृते विशेषः । सूत्रं । न १-१ ( अव्य० ) नाम् ७-१ स्व० दीर्घः १-१ ( स्त्री० ) तिसृचतसृ ६-२ ( सांके० ) छंदसि ७-१ वा ३-१ तिसृचतसृ इत्येतयोरिति । स्त्रीलिंगे वर्त्तमानयोस्त्रिचतुरशब्दयोर्नामि परे दीर्घो न भवति । छंदसि तु वा भवति । वेदे तु तिसृणां तिसॄणां । चतसृणां चतसॄणां । इति द्वे रूपे भवतः। अन्यथा तिसृणां चतसृणामित्येव । सुपि ( क्विला० ) ॥

गिर्शब्दस्य भेदः । ( य्वोर्वि हसे ) धातोरिकारोकारयोर्दीर्घो भवति रेफवकारयोर्हसपरयोः पदान्ते च । गीः । गिरौ । गिरः । हे गीः । गिरम् । गिरौ । गिरः । गिरा । गीर्भ्यां । गीर्भिः । गीर्षु । पूः । पुरौ । पुरः । हे पूः । धूः । धुरौ । धुरः । हे धूः । धकारांतः समिध्शब्दः ( वावसाने ) समित् समिद् । समिधौ । समिधः । हे समित् हे समिद् । समिधं । समिधौ । समिधः । समिधा । समिद्भ्यां । इत्यादि । भकारांतः ककुभ्शब्दः ( वावसाने ) ककुप् ककुब् । ककुभौ । ककुभः । ककुभं । ककुभौ । ककुभः । ककुभा । ककुब्भ्यां । हे ककुप् हे ककुब् । इत्यादि ॥

रेफांतो गिर्शब्दः । गिरत्यनयेति गीः । गीर्वाणी सरस्वती च । गॄ निगरणे क्विप्प्रत्ययः । क्विपः सर्वापहारी लोपः ( ऋत इर् ) इति गिर् इति जातं । तस्य स्वरादौ सर्वत्र स्व० हसादौ तु विशेषः । सूत्रं ( य्वो० ) इश्च उश्च य्वौ । तयोः य्वोः ६–२ ( इ यं० उ वं ) स्व० ( स्रो० ) र् च व् च र्व तस्मिन् र्वि ७–१ स्व० पश्चात् ( नामि० रिलोपो दीर्घः) हसे ७–१ ( अइए ) धातुसंबंधिनोरिकारोकारयोर्दीर्घो भवति रेफवकारयोः परयोः सतोः । किंविशिष्टयोः रेफवकारयोः हसपरयोः हसः परो अग्रे वर्तमानो याभ्यां तौ हसपरौ तयोः । अनेन हसादौ दीर्घः । गि इत्यस्य गी ( हसे० स्रो०) गीः । गिरौ । गिरः । हे गीः । गीर्भ्यां । ३ । गीर्भिः । गीर्भ्यः । २ । गीर्षु इत्यादि रूपमवसेयं । शेषं कण्ठ्यं । एवं पुरधुरादयः। उकारस्य दीर्घत्वे ऊकारः शेषं गिर्शब्दवत् । पूः । पुरौ । पुरः । पुरं । पुरौ । पुरः । पुरा । पूर्भ्यां पूर्भिः । इत्यादि । एवं धूः । धुरौ । धुरः । इत्यादि । धकारांतः समिध्शब्दः इंधनार्थवाचकः । तस्य सौ धौ च (हसे०)वति सिलोपे कृते ( वावसाने) धस्य वा तकारदकारौ । समित् समिद् । भकारादौ ( झबे जबाः ) धस्य दः स्व० सुपि ( खसे० ) धस्य तः स्व० समित्सु । शेषं सुकरं । एवं वीरुध्क्षुद्क्रुधशब्दाः । भकारांतः ककुभ्शब्दः दिग्वाचकस्तस्य समिध्शब्दवत् प्रक्रिया । न वरं ( वावसाने ) इति जबत्वे वः चपत्वे तु पः । ककुप् ककुब् । ककुब्भ्यां ( झबे जबाः ) ककुप्सु ( खसे० ) इत्यादि । जकारांतः स्रज्शब्दः पुष्पमालावाचकः ( दिशाम् ) इति कत्वं । स्रक् स्रग् । स्रजौ । स्रजः । एवं रुक् रुग् । रुजौ । रुजः । भकारादौ(झबे जबाः)स्रग्भ्यां । स्रग्भिः । सुपि(दिशाम् )इति कत्वं । (खसे०किला०कष०) स्रक्षु । दकारांताः सरिद्संविद्संपद्आपद्विपद्परिषद्प्रतिषद्संसद्उपनिषद्मुद्प्रभृतयः ॥

दकारांताः त्यद्तद्यद्एतद्शब्दाः ( स्तः ) त्यदादेस्तकारस्य सौ परे सत्वं भवति ( त्यदादेष्टेरः स्यादौ ) इति सर्वत्राकारः ( आबतः स्त्रियां ) अकारांतान्नाम्नः स्त्रियां वर्त्तमानादाप्प्रत्ययो भवति। पकारः सिलोपार्थः ( सवर्णे दीर्घः सह ) इति दीर्घे कृते स्त्रीलिंगसर्वशब्दस्येव रूपं ज्ञेयं। स्या[1]त्ये। त्याः। त्यां। त्ये। त्याः। त्यया। त्याभ्यां। त्याभिः। त्यस्यै। त्याभ्यां। त्याभ्यः। इत्यादि। सा। ते। ताः। या। ये। याः। एषा। एते। एताः। अन्वादेशे। एतां एनां। एते एने। एताः एनाः। एतया एनया। एतयोः एनयोः। एवं किम्। का। के। काः ( इयं स्त्रियां ) इदमशब्दस्य स्त्रियामियम् भवति सौ परे सिसहितस्य। इयं। इमे। इमाः। इमां। इमे। इमाः। अनया। आभ्यां। आभिः। अस्यै। आभ्यां। आभ्यः। अस्याः। आभ्यां। आभ्यः। अस्याः। अनयोः। आसां। अस्यां। अनयोः। आसु॥

त्यदादीनां विशेषः। दकारांतास्त्यद्तद्यद्एतद्शब्दास्तेषां ( त्यदादेष्टेः० ) इत्यकारे कृते ( आबतः स्त्रियाम् ) इति वक्ष्यमाणसूत्रेण आप्प्रत्ययः आप् इति पकारः ( आपः ) इति सूत्रेण सिलोपार्थः। ततः ( सवर्णे० ) इति दीर्घे कृते सिविषये ( स्तः ) इति तस्य सः। साधना सर्वशब्दवत्। ( स्तः ) स्या। त्ये। त्याः। एवं तद्। सा (आपः) ते ( औरी ) ताः ( सवर्णे० स्रो० ) तां ( अम्श० मोनु० ) ते ( औरी ) ताः ( अम्शसोः०स्रो० ) तया ( टौसोरे। ए अय् ) ताभ्यां। ताभिः। तस्यै ( ङितां यट् यटोच्च ) इति सुट्पूर्वस्य आपो अकारः स्वर० ( एऐऐ ) ताभ्यां। ताभ्यः। तस्याः ५–१ ( ङितां यट्। यटोश्च ) इति सुट्। तस्याः ६–१ ( ङितां यट्। यटो० ) तयोः। ( टौसोरे। एअय्। ) स्वर० तासां ( सुडामः )। स्वर० तस्यां ( आम्ङेः। ङितां यट्। यटोच्च।) स्वर० (मोनु०) तयोः। तासु। त्यदादित्वात्संबोधनाभावः। एवं या। ये। याः। एतद्शब्दस्य एनादेशादिकं पुंवत् ( स्तः। क्लिा० ) एषा। एते। एताः। [एतदोन्वादेशे द्वितीयादौ एनो वा वक्तव्यः] एतां एनां। एते एने। एताः एनाः। एतया एनया।

१ त्यच्छब्दस्य प्रायश्छन्दस्येव प्रयोगो भवति। 'सच्चित्त्यच्चाभवत्' इत्याद्युपनिषत्सु प्रयोगोपलंभात्।

एतयोः एनयोः । इति विशेषः । इत्यादि ज्ञेयम् । एवं मकारांतः किम्शब्दोऽपि सर्वाशब्दवत् ( त्यदादे० ) त्रयादौ ( आबतः स्त्रियां ) का । के । काः । इदम्शब्दस्य सौ विशेषः । इदम् १-१ सूत्रं । इयम् १-१ । ( हसे० मोनु० ) स्त्री ७-१ ( स्त्रियां योः । स्त्रीभ्रुवोः । ङितां यट् । ) स्वर० (सवर्णे) द्विपदं । इदम्शब्दस्य स्त्रीलिंगे सौ परे इयम् आदेशो भवति । गुरुत्वात्सर्वस्य । अनेन इयम् ( हसे० मोनु० ) इयम् । इमे । इमाः । अग्रे द्वितीयाबहुत्वं यावत् । त्यदादेष्टेरत्वे कृते ( दस्य मः ) इति मत्वे कृते ( आबतः स्त्रियां । सवर्णे० ) गंगाशब्दवत् । तृतीयादौ ( त्यदादेष्टेः० ) इति सर्वत्र अकारः टाविषये ओसि च ( अनटौ० ) इति अनादेशे कृते ( आबतः स्त्रियां । टौसोरे एअय् । ) स्व०अनया । अनयोः । भकारादौ ( सुपि च । स्भ्यः ) इति अकारे कृते ( आबतः स्त्रियां ) आभ्यां । आभिः । ङेङसिङस्ङिषु ( आबतः स्त्रियां । ङितां यट् । यटोच्च । स्भ्यः ) अस्यै । अस्याः । आभ्यां । आमि ( सुडामः । स्भ्यः । आबतः० ) स्व० ( मोनु० ) आसां । शेषं सुगमं ॥

**चकारांतः त्वच्शब्दः ( चोः कुः ) इति कत्वं । त्वक् त्वग् त्वचौ त्वचः । त्वचं त्वचौ त्वचः । त्वचा त्वग्भ्यां त्वग्भिः । त्वक्षु । इत्यादि । एवं ऋचवाचप्रभृतयः ॥**

चकारांतस्त्वच्शब्दस्तस्य रसे पदांते च ( चोः कुः ) इति चस्य कः सौ धौ च ( हसे० ) इति सिलोपे कृते चस्य कत्वे कृते ( वावसाने ) इति वा कस्य गकारः । पक्षे ककार एव तिष्ठति । त्वग् त्वक् । हे त्वक् हे त्वग् । भकारादौ तु कत्वे कृते ( झबे जबाः ) कस्य गः स्व० । त्वग्भ्यां त्वग्भिरित्यादि । सुपि ( चोः कुः । कि० कषसंयोगे क्षः ) त्वक्षु । स्वरादौ सर्वत्र स्वर० त्वचौ त्वचः । इत्यादि । एवं ऋच्वाच्शुच्प्रभृतयोऽपि चकारांता ज्ञेयाः । ऋक् ऋग् ऋचौ ऋचः । वाक् वाग् वाचौ वाचः । इत्यादि । शुक् शुग् शुचौ शुचः । तकारांता योषित् सरित् तडित् विद्युत् प्रभृतयः ॥

**पकारांतोऽप्शब्दो नित्यं बहुवचनांतः । अप् जस् इति स्थिते ( न्सम्महतः० ) इति दीर्घः । आपः द्वितीयाबहुवचने पंचस्विति विशेषणात् न दीर्घः । अपः ( भि दपां ) अबादीनां भकारे परे दत्वं भवति । अद्भिः । अद्भ्यः । २ । अपां । अप्सु ।**

पकारांतो अप्शब्दो नित्यं बहुवचनांतः नित्यं स्त्रीलिंगे । अप् अस् इति स्थिते सति ( न्सम्महतः० ) इति दीर्घः ( स्वर० स्रो० ) आपः । शसि पंचसु इति विशेषणान्न दीर्घः किंतु ( स्वर० स्रो० ) अपः । भकारादौ विशेषः । सूत्रं ( भि दपाम् ) भ् ७-१

( स्वर० ) द् १-१ ( हसे० ) अप् ६-३ ( मोनु० ) त्रिपदं । अबादीनामित्ययुक्तः पाठः। किं तु अप्शब्दस्य अप्शब्दसंबंधिनः पकारस्य स्यादौ भकारे परे दकारो भवति। सूत्रे अपामिति बहुवचनं अप्शब्दस्य बहुवचनांतत्वे ज्ञापकं । अनेन पस्य दः। अद्भिः। अद्भ्यः । २ । आमि सुपि च स्व० अपां । अप्सु ॥

शकारांतो दिश्शब्दः ( दिशां कः ) दिश् दृश् स्पृश् मृश् इत्यादीनां रसे पदांते च कत्वं भवति । दिक् दिग् । दिशौ । दिशः । दिशं । दिशौ । दिशः । दिशा । दिग्भ्यां । दिक्षु । इत्यादि । षकारांतः त्विष्शब्दः । ( षो डः ) इति डत्वं ( वावसाने ) इति टकारः । त्विट् त्विड् । त्विषौ । त्विषः । हे त्विट् हे त्विड् । त्विषं । त्विषौ । त्विषः । त्विषा । त्विड्भ्यामित्यादि आशिष्शब्दः सजुष्शब्दवत् । आशीः आशिषौ आशिषः इत्यादि । स्त्रीलिंगस्य अदस्शब्दस्य सौ न विशेषः । द्विवचनादौ तु टेरत्वे मत्वे च कृते अनंतरं ( आबतः स्त्रियाम् ) इत्याप् दीर्घत्वं विभक्तिकार्यम् । पश्चात् ( मादू ) इति ह्रस्वस्य ह्रस्वः दीर्घस्य दीर्घः उकार ऊकारश्च । असौ अमू अमूः । अमुं अमू अमूः । अमुया अमूभ्यां अमूभिः।अमुष्यै अमूभ्यां अमूभ्यः । अमुष्याः अमूभ्यां अमूभ्यः । अमुष्याः अमुयोः अमूषां । अमुष्यां अमुयोः अमूषु । ( सामान्ये अदसः कः० ) अमुका अमुके अमुकाः । इत्यादि स्त्रीलिंगे सर्वाशब्दवद्रूपं ज्ञेयं ॥ इति हसांताः स्त्रीलिंगाः ॥

शकारांतो दिश्शब्दस्तस्य रसे पदांते च विशेषः सूत्रं । दिश् ६-३ स्वर० ( मो० ) क १-१ ( स्रो० ) दिशदृशस्पृशमृशऋत्विजदधृषसृजउष्णिहअंचयुजक्रुंचअसृजइत्यादीनां शकारस्य अंतस्य च रसे पदांते च कत्वमित्यर्थः । शेषं कंठ्यं । अनेन रसे पदांते च शस्य कः । ततः ( वावसाने ) दिक् दिग् । हे दिक् हे दिग् । दिशौ । दिशः । दिग्भ्याम् ( दिशां कः । झबे जबाः ) दिक्षु ( दिशां कः ) इति कत्वं ( किला० कषसं० ) एवं दृक् दृग् दृशौ दृशः । मर्मस्पृक् मर्मस्पृग् मर्मस्पृशौ मर्मस्पृशः । ऋत्विक् ऋत्विग् ऋत्विजौ ऋत्विजः । इत्यादि । षकारांतस्त्विष्शब्दस्तस्य रसे पदांते च ( षो डः ) इति डत्वं । सौ धौ च ( हसे० वावसाने ) डकारटकारौ । त्विट् त्विड् । हे त्विट् हे

त्विड् । भकारादौ ( षो डः । ) स्वर० त्विड्भ्यामित्यादि । सुपि । ( षो डः । खसे चपा० ) डस्य टः स्वर० त्विट्सु । एवं प्रावृष्विप्रुष्रुष्तृष्शब्दाः । आशिष्शब्दः सजुष्शब्दवत् ज्ञेयः । ( दोषाम्० ) इति षस्य रः । ( सजुषाशिषो रसे पदांते च दीर्घः । स्रो० ) । आशीः । स्वरादौ स्वर० आशिषौ । आशिषः । आशिषं आशिषौ आशिषः ( दोषां रः । सजुषाशिषो रसे पदांते च दीर्घः । ) जल० । आशीर्भ्यां । आशीःषु । ( स्रो० ) इत्यादि ज्ञेयं । सकारांतस्य स्त्रीलिंगस्य अदस्शब्दस्य सौ विशेषो न । सिविषये यथा पुंल्लिंगे रूपं तथैवात्रापि ( त्यदादेष्टेः० ) इत्यकारः ( आवतः स्त्रियां । सौ सः । सेरौ । ओ औ औ ) असाविति सिद्धं । द्विवचनादौ सर्वत्र टेरत्वे कृते ( दस्य मः ) ततः ( आवतः स्त्रियाम् ) इत्यापि कृते स्त्रीलिंगे सर्वाशब्दवत् विभक्तिकार्ये कृते ( औरी । अइए ) पश्चात् ( मादू ) इति ह्रस्वस्य स्वरस्य ह्रस्व उकारः दीर्घस्य स्वरस्य दीर्घ ऊकारः । अमूः ( स्वर्णे० । मादू । स्रो० ) अमूं अमू अमूः । अमुया ( टौसोरे ) अमूभ्यां अमूभिः । ( मादू ) अमुष्यै ( ङितां यट् । यटोच्च ) इति पूर्वस्यापोऽकारः ( मादू । क्रि० ) स्व० ( एऐऐ ) अमूभ्यां ( मादू ) अमूभ्यः ( मादू ) अमुष्याः अमूभ्यां अमूभ्यः । अमुष्याः अमुयोः ( टौसोरे । ए अय् । ) स्वर० ( मादू ) अमूषां ( सुडामः । मादू । क्रि० ) स्वरहीनं० । अमुष्यां ( आम् ङेः । ङितां यट् । यटोच्च ) पूर्वस्य चापो अकारः ( मादू । किला० ) स्व० । अमुयोः ( टौसोरे ) अमूषु ( मादू । किला० ) सामान्येऽर्थे वाच्ये सति अदस्शब्दात्कः प्रत्ययो भवति । अमुका अमुके अमुकाः इत्याद्या ज्ञेयाः । सुमनस्अप्सरस्भास्सुवचस्प्रभृतयो ज्ञेयाः ॥ इति हसांतस्त्रीलिंगसाधनम् ॥

अथ हसांताः नपुंसकलिंगाः । रेफांतो वार्शब्दः ( नपुंसकात्स्यमोर्लुक् ) वाः वारी । वारि । २ । अयम् इति विशेषणात् नुम् न भवति । वारा वार्भ्यां वार्भिः वार्षु इत्यादि । चतुर्शब्दो नित्यं बहुवचनांतः ( चतुराम्शौ च ) इत्याम् । चत्वारि । २ । इत्यादि ॥

अथ हसांतनपुंसके किंचित्साधनमुच्यते । अथ मुख्यवृत्त्या हकारांतः शब्दो नास्ति । गौणत्वे तु सुष्ठु अनड्वान् यस्य तत् स्वनडुह् । स्वनडुह् १-१ ( नपुंसकात्स्यमोर्लुक् । वसां रसे । वावसाने० ) स्वनडुत् स्वनडुद् । स्वनडुही । स्वनड्वांहि । ( चतुरनडुहोराम् शौ च) इत्याम् । पुनरपि स्वनडुत् स्वनडुद् । स्वनडुही । स्वनड्वांहि । एवं गोधुक् गोधुग् । गोदुही । गोदुंहि । अनुपानत् अनुपानद् । अनुपानही अनुपानंहि । इत्यादि । अथ रेफांतो वारशब्दस्तस्य ( नपुंसकात्स्यमोर्लुक् स्रो० ) वाः । हे वाः । द्वित्वे

तु ( ईमौ । ) स्व० वारी । हे वारी । जसि शसि च ( जस्शसोः शिः ) इति शौ कृते अयम् इति विशेषणात् यमप्रत्याहारांतस्य नुमागमनिषेधान्नुमागमो न भवति । तेन स्व० । वारि । हे वारि । पुनरपि द्वितीयायां । वाः । वारी । वारि । तृतीयादौ स्वरादौ । स्व० । वारा । हसादौ तु । जल० । वाभ्याम् । सुपि क्विला० जल० । वार्षु । इत्यादयः । चतुर्शब्दस्य बहुवचनांतस्य ( जस्शसोः शिः ) इतीकारे कृते ( चतुराम् शौ च ) इत्याम् ( उ वं ) स्व० चत्वारि ।२। चतुर्भिः । चतुर्भ्यः । चतुर्भ्यः । आमि ( रः संख्यायाः ) इति नुडागमः। ( षरुर्णो०राद्यपो० )स्वर०( चतुर्णाम् । सुपि क्विला० ) चतुर्षु । शेषं कंठ्यं । गौणत्वे तु प्रियाश्चत्वारः पुरुषा यस्य तत् । प्रियचतुः । प्रियचतुरी । प्रियचत्वारि । प्रियाः चतस्रः स्त्रियो यस्य तत् । प्रियचतसृ । प्रियचतसृणी । प्रियचतसृणि ॥

**नकारांतो अहन्शब्दः । ( अह्नः सः ) अहन्शब्दस्य नकारस्य सकारो भवति रसे पदांते च ( स्रोर्विसर्गः ) अहः ॥ ( ईमौ । वेङ्योः ) अह्नी अहनी । अहानि । २ । अह्ना अहोभ्यां अहोभिः । अह्ने अहोभ्यां अहोभ्यः । अह्नः अहोभ्यां अहोभ्यः । अह्नः अह्नोः अह्नां । अह्नि अहनि अह्नोः अहःसु । ब्रह्मन्शब्दस्य रसे पदांते च नस्य लोपो वक्तव्यः । ब्रह्म ब्रह्मणी ब्रह्माणि । २ । ब्रह्मणा ब्रह्मभ्यां इत्यादि । एवं चर्मन्वर्मन्पर्वन्प्रभृतयः ॥**

नकारांतो अहन्शब्दः। सूत्रं अहन् ६-१ ( अल्लोपः स्वरे । ) स्व० ( स्रो० ) सः १-१ ( स्रो० ) अह प्रकाशगत्योः । अह्नातीति अहः । अन्नंतअहन्शब्दस्य संबंधिनो नकारस्य सकारो भवति षष्ठीनिर्दिष्टत्वादंत्यस्य रसे पदांते च । अनेन सौ धौ च आमि च ( नपुंसकात्स्यमोर्लुक् ) इति स्यमोर्लोपे कृते ( अह्नः० ) इति नकारस्य सकारे कृते ( स्रो० ) अहः ।२। हे अहः । द्विवचने तु ( ईमौ ) इतीकारे कृते ( वेङ्योः ) इति वा आकारलोपः । स्व०। अह्नी अहनी । २। जस्शस्विषये तु ( जस्शसोः शिः । नोपधायाः । ) स्वर० अहानि ।२। यमप्रत्याहारांतत्वान्न नुम्। स्वरादौ सर्वत्र ( अल्लोपः स्वरे ) इति अल्लोपः अह्ना अह्ने इत्यादि । भकारादौ । ( अन्हः सः ) इति नकारस्य सकारः ( स्रो० हबे० । उओ ) अहोभ्यां। अहोभिरित्यादि । ङिवचने( वेङ्योः ) इति वा अल्लोपः स्वरे । स्व०। अह्नि अहनि। सुपि (अह्नः सः) इति सः। स्व०। अहस्सु ब्रह्मन्शब्दस्य ( नपुंसकात्स्यमोर्लुक् ) इति सौ अमि च लुप्ते सति ( नाम्नो० ) इत्यधाविति विशेषणात् धौ नस्य लोपो न भवति । ब्रह्म । हे ब्रह्मन् । क्षेमेंद्राचार्यस्तु संबो-

धनेपि वा नकारलोपमिच्छति । तेन हे ब्रह्म इत्यपि स्यात् । प्रक्रियाकौमुद्यां च ( संबुद्धौ वा नपुंसकानां नलोपो वाच्यः ) इति द्विवचने तु । ( ईमौ ) इति ईकारे कृते अम्वयुक्तादिति विशेषणादल्लोपनिषेधः । स्वर० । ब्रह्मणी । बहुत्वे (जश्शसोः शिः । नोपधायाः । ष्रुन्नों०) स्व० । ब्रह्माणि । २ । अग्रे स्वरादौ सर्वत्र (ष्रुन्नों०) स्व० । ब्रह्मणा । रसे परे च ( नाम्नो० ) ब्रह्मभ्यां । ब्रह्मसु । एवं चर्मन्कर्मन्वर्मन्शर्मन्नर्मन्पर्वन्प्रभृतयः । ( अल्लोपः स्वरे ) इत्यकारलोपानर्हाः । दामन्सामन्नामन्लोमन्व्योमन्प्रेमन्धामन्हेमन्प्रभृतयोऽपि नांता शब्दाः साध्याः । नाम नामनी । २ । एवं दंडिन् । दंडि दांडिनी दंडीनि । २ ॥

**( नांताददंताच्छंदसि । ङिश्योर्वा लोपः ) परमे व्योमन् । सर्वा भूतानि । इत्यादीनां स्यमोर्लुकि कृते टेरत्वं भवति । स्यादाविति विशेषणात् द्विवचनादौ तु टेरत्वे कृते नपुंसके सर्वशब्दवद्रूपं ज्ञेयम् ॥**

पुनर्विशेषमाह ॥ ( नांता० ) छंदसि वेदे नांतात् नकारांतात् अदंतात् अकारांतात् शब्दात्परयोर्नपुंसकलिंगसंबंधिनोर्ङिश्योर्वा लोपः । ङि सप्तम्येकवचनं शि ( जश्शसोः शिः ) इति एतयोर्वा बहुलं लोपो भवति । यथा परमे ७–१ व्योमन् ७–१ उभयत्रापि ७–१ । ङि एकत्र ( अइए ) अन्यत्र ङिलोपः । छांदसिकत्वात् ( नाम्नो नो० ) इत्यपि न भवति । अथवा [ छंदस्यागमजानागमजयोर्नकारयोर्लोपालोपौ क्वचिद्वक्तव्यौ ] इति । सर्व १–३ भूत १–३ उभयत्र प्रथमाबहुवचनं (जश्शसोः शिः । नुमयमः । नोपधायाः । ष्रुन्नों० ) स्वर० ततः शिलोपः छांदसिकत्वात् ( नाम्नो नो लोपशधौ ) इति नकारस्यापि लोपो भवति । यद्वा निमित्ताभावे नैमित्तिकस्याप्यभावः । छांदसिकत्वादेव दीर्घत्वं तु न निवर्त्तते । भूत १–३ ( जश्शसो० नुम०नोप० ) स्वर परमे प्रकृष्टे व्योमन् आकाशे सर्वा भूतानि सर्वाणि भूतानि वर्त्तंते । यथा परमे व्योमन् इत्यत्र ङिलोपः सर्वाणि भूतानि इत्यत्र नुम्सहितशिलोपः । परमे व्योमन् सर्वाभूतानि इति छांदसिकप्रयोगः । असृक् । असृजी । असृंजि ( दिशाम्० ) इति कत्वम् ॥

**दकारांतास्त्यदादयः शब्दाः । त्यदादीनां स्यमोर्लुकि कृते टेरत्वं न भवति । स्यादाविति विशेषणात् द्विवचनादौ टेरत्वे कृते सर्वशब्दवद्रूपं ज्ञेयम् । त्यत् त्यद् । त्ये । त्यानि । २ । तत् तद् । ते । तानि । २ । यत् यद् । ये । यानि । २ । एतत् एतद् । एते । एतानि । २ । किं । के । कानि । २ । इदं । इमे । इमानि । २ । तृतीयादौ सर्वत्र पुंवत् ॥**

अथ दकारांतास्त्यदादयः। तेषां त्यदादीनां स्यमोर्लुकि कृते टेरत्वं न भवति। स्यादौ विभक्तौ परे एव भवति न तु लुपि कृते इति विशेषणात् लुकि न तन्निमित्तमिति। अत एव (स्तः) इति सत्वमपि न भवति । तत्। द्विवचनादौ (त्यदादे०ईमौ। अइए) त्ये। त्यानि। २। तत् (त्यदादे० जश्श० नुम०नोप०) स्व० तृतीयादौ सर्वत्र (त्यदादेष्टे०टेन) तेन। ताभ्यां (अद्भि) तैः (अइए। ए ऐऐ) तस्मै (सर्वादेः स्मट्। एऐऐ) ताभ्यां (अद्भि) तेभ्यः (एस्भि०) तस्मात् (ङसिरत्) इति स्मडागमः (सवर्णे०) ताभ्यां (अद्भि) तेभ्यः (एस्भि०) तस्य (ङस्स्य) तयोः (ओसि। ए अय्) तेषां (सुडामः। एस्भि०क्लिा०) स्व० (मोनु०) तस्मिन्(ङि स्मिन्) तयोः (ओसि। ए अय्) तेषु (क्लि०) त्यदादीनां घेरभावः एवं एतत् एते एतानि। द्वितीयायां [एतदोन्वादेशे०] इत्यस्य प्राप्तौ अमि विषये वक्तव्येन विशेषमाह [नपुंसके एतदो अन्वादेशे अमि एनदिति वक्तव्यं] एतत् एनत् एते एने एतानि एनानि। शेषं पुंवत्। केचित्तु इदम्शब्दस्याप्यन्वादेशे नपुंसके अमि एनदितीच्छंति। मकारांतः किम्शब्दस्तस्य (नपुंसकात्स्यमोर्लुक्) इति लुकि कृते त्यदादेष्टेरत्वं न। किंतु (मोनु०) अन्यत्र तु त्यदादेष्टेरत्वे कृते नपुंसके सर्वशब्दवत्। किं के कानि। २। एवं इदम् इमे इमानि। २। तृतीयादौ सर्वत्र पुंवत् पुंलिंगवत्॥

**चकारांत प्रत्यच्शब्दः (चोः कुः) प्रत्यक्। २। अञ्चेर्लोपो दीर्घश्च। प्रतीची। २। प्रत्यंचि। २। तकारांतः जगत्शब्दः। जगत् जगती जगंति। २। महत्शब्दे तु न्सम्महत इति विशेषणात् सिविषये दीर्घत्वं। महत् महती महांति। इत्यादि॥**

चकारांतः प्रत्यच्शब्दः (नपुंसकात्स्यमोर्लुक्। चोः कुः। वावसाने) प्रत्यक् प्रत्यग्। २। द्विवचने (ईमौ। अंचेरलुग्दीर्घश्च।) स्वर०।प्रतीची। २। बहुत्वे) जश्श०नुम०नश्चा०) प्रत्यंचि। २। अत्राकारस्योपधाऽभावात् (नोपधायाः) इति न दीर्घत्वं। अग्रे तृतीयादौ पुंवत्। एवं स्वरादौ (अंचेरलुक् दीर्घश्च) भकारादौ (चोः कुः। झबे जबाः) प्रतीचा प्रत्यग्भ्यां प्रत्यग्भिरित्यादि। सुपि (चोः कुः। किला० कष०) प्रत्यक्षु। एवं तिर्यक् तिरश्ची तिर्यंचि। २। अन्वक् अनूची अन्वंचि। २। गवाक् गोची गवांचि। २। गां अंचतीति गोअक् (नो लोपः। गवादेरवर्णागमः। ओ अव्) गवाक्। गवाच् औ (अंचेरलोपो०) निमित्ताभावे नैमित्तिकस्याप्यभावः। इत्यवर्णागमस्यापि लोपः (ओ अव्) इत्यस्यापि निषेधः। गोची। गवाच् अस् (जश्शसोः शिः। नुमयमः) इत्यादितकारांतो जगत्शब्दस्तस्य स्यमोर्लुकि जगत्। द्वित्वे (ईमौ।) स्वर०। जगती बहुत्वे (जश्श० नुम० नश्चाप०) जगंति। २। शेषं कंठ्यं। एवं यकृत् यकृती यकृन्ति। शकृत् शकृती शकृंति। महत्शब्दोऽप्येवं। न वरं।

शौ विषये ( न्सम्महतो धौ दीर्घः० ) इति दीर्घत्वं । महत् महती महांति । २ । महता महद्भ्यामित्यादि पुंवत् ॥

**सकारांताः पयस्तेजस्वचस्प्रभृतयः । पयः पयसी पयांसि । । २ । पयसा पयोभ्यां पयोभिः । इत्यादि । अदस्शब्दस्य स्यमोर्लुकि कृते ( स्रोर्विसर्गः ) द्विवचनादौ टेरत्वे कृते मत्वोत्वे । अदः अमू अमूनि । २ । शेषं पूर्ववत् इति हसांता नपुंसकलिंगाः ॥ इति हसांताः समाप्ताः ॥**

सकारांतः पयसशब्दः । पयः पानीयं दुग्धं वा । स्यमोर्लुकि कृते ( स्रोर्वि० ) पयः । २ । द्वित्वे ( ईमौ । ) स्वर० । पयसी । २ । बहुत्वे ( जस्शसोः शिः । नुमयमः । न्सम्महतः० ) इति दीर्घः । पयांसि । २ । तृतीयादौ स्वरादौ । स्वर० । भकारादौ ( स्रो० हबे । उओ ) पयसा पयोभ्यां पयोभिरित्यादि । एवं तेजस् वचस् महस् यशस् वयस् शिरस् तपस् मनस् तमस् अंभस् नभस् एनस् सरस् वासस् रजस् छंदस् अनस् अयस् स्रोतस् रक्षस् श्रेयस् उषस् वर्चस् मेदस् शेफस् श्रवस् अर्चस् तरस् सरस् रहस् ऊधस् यादस् आगस् एधस् ओकस् प्रभृतयः । हविष्शब्दो हविर्द्रव्यवाची ( दोषां रः । नपुंस० स्रो० ) हविः हविषी ( ईमौ ) स्वर० हवींषि ( जस्शसोः शिः । नुम० न्सम्महतो धौ दीर्घः० ) इति दीर्घे कृते नुमि सकार एवास्तीति न्संतत्वं ततो नुम् । विसर्गव्यवधानेपि षत्वं । हविषा । भ्यांभिस्सुपि विषये ( दोषां रः । ) जल० हविर्भ्यां हविर्भिः । हविःषु । एवं सर्पिः सर्पिषी सर्पींषि । अर्चिः अर्चिषी अर्चींषि । ज्योतिः ज्योतिषी ज्योतींषि । रोचिः रोचिषी रोचींषि । आयुः आयुषी आयूंषि । वपुः वपुषी वपूंषि । जनुः जनुषी जनूंषि । चक्षुः चक्षुषी चक्षूंषि । यजुः यजुषी यजूंषि । सर्पिः । सर्पिषी । सर्पींषि । धनुः । धनुषी । धनूंषि । इत्यादि । अदस्शब्दस्य प्रथमाद्वितीययोर्विशेषः । तत्रैकवचने ( नपुंसकात्स्यमोर्लुक् ) इति लुकि कृते सति त्यदाद्यष्टेरत्वं भवति । किंतु ( स्रो० ) अदः । द्वित्वे ( त्यदादेष्टेरः० दस्य मः । ईमौ । अइए । मादू ) एकारस्य ऊकारः । अमू । २ । अमुनी इति तु छांदसं रूपं । उक्तं च भागवते । " अमुनी भगवद्रूपे मया ते ह्यनुवर्णिते । उभे अपि न गृण्हंति मायासृष्टे विपश्चितः ॥ १ ॥ " इति । बहुत्वे ( त्यदादे० दस्य मः जस्शसो० नुम० नोपधायाः । मादू ) आकारस्य ऊकारः । अमूनि । २ । तृतीयादौ सर्वत्र पुंवत् । ३–१। ( त्यदादेष्टेरः० । मादू । टा नास्त्रियां ) अमुना । ३–२ ( त्यदादे० अद्भि । मादू ) अमूभ्यां । ३–३ भिस् भिस् ( एस्भि० एरी ब० ) अमीभिः । ४–१ ( त्यदा० दस्य मः । सर्वादेः स्मट् । मादू । किला० एएऐ ) अमुष्मै । ४–२। ( अद्भि । मादू )

अमूभ्यां ४–३ ( एस्भि० एरी० ) अमीभ्यः । ५–१ ( त्यदा० दस्य मः । माद्
अतः० क्लिा० ) अमुष्मात् । ५–२ । ( आद्रि । मादू० ) अमूभ्यां ५–३ ( एस्भि०
एरी० ) अमीभ्यः ६–१ ( त्यदा० ङस्स्य । दस्य मः । मादू । क्लिा० ) अमुष्य
६–२ । ( ओसि । एअय् । मादू ) अमुयोः ६–३ ( त्यदा० दस्य मः । सुडामः ।
एस्भि० एरी० क्लिा० ) अमीषां । ७–१ । ( त्यदा० । दस्य मः । ङि स्मिन् । मा-
दू । क्लिा० ) अमुष्मिन् ७–२ ( त्यदा० दस्य मः । ओसि । ए अय् । ) स्व०( मा-
दू ) अमुयोः । ७–३ ( एस्भि० एरी० क्लिा० ) अमीषु ॥ इति हसांतनपुंसक-
लिंगसाधनं । इति षड्लिंगाः समाप्ताः ॥

**अथ युष्मदस्मदोः स्वरूपं निरूप्यते । तयोश्च वाच्यलिंग-
त्वात्त्रिष्वपि लिंगेषु समानं रूपं ( त्वमहं सिना ) युष्मदस्मदोः
सिसहितयोः त्वं अहं इत्येतावादेशौ भवतः यथासंख्येन ।
त्वं । अहं । ( युवावौ द्विवचने ) युष्मदस्मदोर्द्विवचने परे युव
आव इत्येतावादेशौ भवतः ॥**

अथेति संज्ञासंधिस्वरांतहसांतलिंगत्रयसाधनानंतरं युष्मदस्मदोः युष्मच्च अस्मच्च
युष्मदस्मदौ तयोः स्वरूपं मुख्यस्वरूपमेव निरूप्यते । न तु गौणत्वविशेषादिक-
मित्यर्थः । अत्राह परः । ननु यथा सर्वादयो लिंगत्रयेपि साधितास्तथा एतावपि कथं न
साधितौ तत्रोत्तरमाह । तयोर्युष्मदस्मच्छब्दयोर्वाचि वचने वाग्व्यवहारकाले अलिंगत्वा-
त् स्वविषये लिंगोद्द्योतकत्वाभावात् त्रिष्वपि पुंस्त्रीनपुंसकलिंगेषु समानं सदृशमेव रूपं
यथा त्रिषु लिंगेषु सर्वो जनः सर्वा जगती सर्वं जगत् इत्यादिरूपभेदो दृश्यते न तथै-
तयोः । तथा त्वं देवः त्वं देवी त्वं ब्रह्म इत्यादौ न कोपि रूपभेदः । अतः प्राग्रसा-
धितावित्यर्थः । अथ वा वाच्यमिति नामशब्दरूपं अभिधेयं विशेष्यपदमित्यर्थः । तस्यै-
व लिंगं विद्यते ययोस्तौ वाच्यलिंगौ यदि वा वाच्यस्य पुरुषस्त्रीकुलादेर्लिंगमेव लिंगं
ययोरिति बहुव्रीहिः । यदुक्तं । “वाच्यमित्युच्यते भेद्यं तल्लिंगं भजते तु यः । विशे-
षणत्वमापन्नो वाच्यलिंगः स उच्यते ॥ १ ॥” इति । अनयोः साधनमुच्यते । प्रथ-
मैकवचने सूत्रं । त्वं च अहं च त्वमहं १–२ ( सांके० ) सि ३–१ ( टा नास्त्रियां )
युष्मद० वृत्तिः कंव्या । युष्मदः सिना सह त्वं इत्यादेशः । अस्मदश्च सिना सह अ-
हं इत्यादेशः । द्विवचने । युष्मद् औ अस्मद् औ इति स्थिते सति । सूत्रं ( युवा-
वौ० ) युवश्च आवश्च युवावौ १–२ ( ओ औ औ ) द्विवचने ७–१ ( अइए ) युष्मद०
युष्मद्शब्दस्य सर्वविभक्तिद्विवचने परे युव आदेशः अस्मदश्च आव इत्यर्थः । युव औ
आव औ इति स्थिते ॥

( आमौ ) युष्मदस्मदोः परं औ आम् भवति । युवां । आवां ( यूयंवयं जसा ) जसा सहितयोर्युष्मदस्मदोः यूयं वयं इत्येतावादेशौ भवतः । यूयं । वयं । ( त्वन्मदेकत्वे ) युष्मदस्मदोः त्वत् मत् इत्येतावादेशौ भवतः एकत्वे गम्यमाने ( आम्स्भौ ) युष्मदष्मदोष्टेरात्वं भवति अमि सकारे भिसि च परे । त्वां । मां । युवां । आवां त्यदादेष्टेरत्वे कृते ( शसि ) इति दीर्घत्वं ( शसो नो वक्तव्यः ) युष्मान् । अस्मान् ॥

सूत्रं । आम् १–१ ( हसे० ) औ १–१ ( सांके० ) स्वर० सिद्धं । युष्मदस्मद्भ्यां परः औ आम् भवति । यदादेशस्तद्वदिति । ननु आम् किमिति क्रियते अमेव कथं न क्रियते । मात्रालाघवमपि पुत्रोत्सवं मन्यंते वैयाकरणा इति सत्यं । अमि कृते (अम्शसोरस्य ) इत्यलोपः स्यादिति आमेव युक्तः अनेन औ इत्यस्य आम् ( सवर्णे० ) युवां आवां इति सिद्धं । बहुत्वे युष्मद् अस् अस्मद् अम् इति स्थिते । सूत्रं (यूयंवयं०) यूयं च वयं च यूयंवयं १–२ । ( सांके० ) जस् ३–१ स्वर० सिद्धं । जसा० अनेन जस्सहितस्य युष्मदो यूयं इत्यादेशः अस्मदश्च वयं इत्यादेशः । यूयं वयम् । अमि सूत्रं ( त्वन्मत्० ) त्वच्च मच्च त्वन्मत् १–२ ( सांके० ) एकस्य भाव एकत्वं तस्मिन्नेकत्वे ७–१ ( अइए ) त्वन्मत् अग्रे एकत्वे ( चपा अबे जबाः । ) स्वर० सिद्धं । अग्रे वृत्तिः कंठ्या । एकवचने एकार्थवाचित्वे वा युष्मदस्त्वत् अस्मदो मत् आदेशः । त्वत् अम् मत् अम् इति स्थिते । सूत्रं आ १–१ ( सांके० ) अम् च शस् च भिस् च आम्भिस देशैकग्रहणेन देशीयग्रहणं तस्मिन् आम्स्भौ ७–१ ( ङेरौ० ) टिलोपः स्व० आ अग्रे ( आम्स्भौ । सवर्णे० । ) युष्मद० अनेन त्वत् इत्यस्य त्वा मत् इत्यस्य मा ( अम्श० मोनु० ) त्वां । मां । द्विवचने तु प्रागवत् । शसि युष्मद् अस् अस्मद् अस् इति स्थिते । त्यदादेष्टेरकारे कृते (अम्श०) इत्यकारलोपः ( शसि ) इति दीर्घः । वाच्यलिंगत्वात्केवलं पुंल्लिंगत्वाभावात् ( सो नः पुंसः ) इति सूत्रेण सकारस्य नकारो न भवति । तेन विशेषमाह [ शसो नो वक्तव्यः ] शसः सकारस्य नकारो भवतीत्यर्थः । युष्मदस्मदोरेवेति विशेषः । ( शसि ) युष्मान् अस्मान् इति सिद्धं ॥

त्वन्मदादेशे च कृते ( ए टाङ्योः ) युष्मदस्मदोष्टेरेत्वं भवति टा ङि इत्येतयोः परयोः । अयादेशः । त्वया । मया । युवाभ्यां । आवाभ्यां । युष्माभिः । अस्माभिः । ( तुभ्यं मह्यं ङया ) ङया सहितयोः युष्मदस्मदोः तुभ्यं मह्यं एतावादेशौ

